ओम्

देव-कृतं

# दैवम्

श्रीकृष्णलीलाशुकमुनि-विरचित-

## पुरुषकाराख्यवार्तिकोपेतम्

•

पण्डित-युधिष्ठिर-मीमासकेन

सशोधित टिप्पणीभिरलकृत च

•

प्रकाशक —

सचालक —भारतीय-प्राच्यविद्या-प्रतिष्ठान

•

मुद्रक —

घीसाराम करणता, नेशनल प्रेस, अजमेर।

प्रथमबार ]        स० २०१६        [ मूल्य [illegible] रूप्याणि

# भारतीय-प्राच्यविद्या-प्रतिष्ठान

## उद्देश्य

इस सस्था के उद्देश्य "भारतीय प्राचीन वाड्मय का अन्वेषण, रक्षण और प्रसार" है।

## कार्य क्रम

उपर्युक्त उद्देश्यो की पूर्ति के लिए प्रतिष्ठान के कार्य-क्रम को निम्न विभागो मे बाटा है—

१—भारतीय प्राचीन वाड्मय का अनुसन्धान।

२—भारतीय प्राचीन वाड्मय के अनुसन्धान द्वारा विभिन्न विषयो पर मौलिक ग्रन्थो तथा निबन्धो का लेखन और प्रकाशन।

३—भारतीय वाड्मय के विविध विभागो के इतिहास तथा भारत के प्राचीन इतिहास सम्बन्धी ग्रन्थो का लेखन और प्रकाशन।

४—भारतीय प्राचीन वाड्मय का शुद्ध सम्पादन तथा प्रकाशन।

५—भारतीय प्राचीन वाड्मय का राष्ट्रभाषा ( हिन्दी ) मे प्रामणिक अनुवाद।

६—सस्कृत वाड्मय तथा इतिहास सम्बन्धी गवेषणात्मक त्रैमासिक "पत्रिका" का प्रकाशन।

७—उपर्युक्त काय-क्रम की पूर्ति के लिए "बृहत् पुस्तकालय" का निर्माण।

८—प्राचीन वाड्मय की रक्षा और प्रसार के लिए 'साङ्गवेद-विद्यालय' का सचालन।

९—उद्देश्यो की पूर्ति करने हारे विशिष्ट साहित्य के प्रसार के लिए 'विक्रय-विभाग' का सचालन।

विशेष विवरण के लिए "प्रतिष्ठान की योजना, काय-क्रम तथा कृतकाय-विवरण" पुस्तिका विना मूल्य मगवाइये।

**सचालक—भारतीय-प्राच्यविद्या-प्रतिष्ठान**

२४/३१२ रामगज
अजमेर

४९४३ रेगपुरा, गली ४०
करोलबाग, नई दिल्ली ५।

# उपोद्घातः

## दैवं पुरुषकार-वार्तिकोपेतम्

### दैवम्

देवनाम्ना केनचिद् विदुषा पाणिनीये धातुपाठे[1] पुन पठिताना सरूपाणा धातुनाम् असकृत्पाठफलनिदशक एको द्विशतपद्यमितो लघुग्रन्थो निरमायि ।

**प्रयोजनम्**—देवेन ग्रन्थनिर्मितिप्रयोजन पद्यबन्धप्रयोजन च स्वय ग्रन्थादावित्थ प्रतिपाद्यते—

**पठितस्य पुन पाठे फल वृत्तेन वक्ष्यते ।**
**न विना वृत्तबन्धेन वस्तु प्रायेण सुग्रहम् ॥[2] इति ॥**

ग्रन्थान्ते च पठ्यते—

**इत्यनेकविकरणसरूपधातुव्याख्यान देवनाम्ना विदुषा विरचित दैव समाप्तम् ।[3] इति ।**

**पुन पाठफलनिदर्शनप्रकार** —धातूना पुन पाठफल चात्र ग्रन्थकर्त्रा क्वचिद् धातुस्वरूपप्रदशनेन, क्वचित्तदर्थोपन्यासेन, क्वचिद् विकरण-सहकारेण, क्वचिद् द्वाभ्या समस्तैर्वोपायै सह लट्लङ्लिडा रूपभेद प्रदर्श्य प्रायण सूच्यते । क्वचित् प्रत्यक्षवचनेनाप्युच्यते । यथा—

---

१ पाणिनीयधातुपाठस्य तद्वृत्तीना चेतिवृत्त स्वसपादिताया 'रामलाल कपूर निक्षेप निधि अमतसर' द्वारा प्रकाशिताया क्षीरस्वामिविरचिताया क्षीरतरङ्गिण्या आरम्भे विस्तरेणास्माभिरुपनिबद्धम् । पाणिनीयापाणिनीयसकलधातुपाठाना चेतिहासपरिज्ञानायास्मल्लिखितस्य 'सस्कृत व्याकरण-शास्त्र का इतिहास' ग्रन्थस्य २०-२१ २२ अध्याया ( भाग २, पृष्ठ २२—११६ ) अवलाकनीया ।

२ दव श्लोक २ ।

३ अय लेखो देवस्यवेति पुरुषकारे व्याख्यानदशनाद् विज्ञायते ।

**स्वरभेदाद् द्विरुच्यते ।[१] इति ।**

**इटा भिदा ।[२] इति ।**

**अशतोभिन्नाना सरूपाणामपि सग्रह** —न चात्र केवल तेषामेव भूप्रभृतीना धातूना पुन पाठफल ग्रन्थकृता प्रदश्यते ये सर्वात्मना सरूपा, अपितु सत्यपि प्रयोगकाले नुमादिना वैरूप्ये धातुपाठ उपदेशावस्थायामनुबन्धपरित्यागे ये समानरूपा पठचन्ते, सत्यपि चोपदेशावस्थाया वैरूप्ये प्रयोगकाले येषा प्रायेण सारूप्यमुपलभ्यते, तेऽप्यत्र ग्रन्थकारेण सगृहचन्ते । यथा—

उपदेशे सदृशा प्रयोगे विसदृशा **अक-अकि**-प्रभृतय । अनयो प्रयोगकाले **अकेत् अङ्केत्** इत्यव रूपभेदो भवति ।[३]

पाठे विरूपा प्रयोगे क्वचित् सदृशा **णिदृ-णेदृ**-प्रभृतय । अनयोरुपदेशे सत्यपि रूपभेदे लिड्व्यतिरिक्तेषु लकारेषु **नेदते नेदिष्यते** इत्येव समाना एव प्रयोगा भवन्ति । लिटि तु **निनिदे निनेदे** इत्येव रूपभेद ।[४]

**सरूपाणामपि केषाचिदसग्रह** —सरूपा अपि सर्वे धातवो नात्र ग्रन्थकृता विवृता । प्रायेणैव हि तेषा सग्रहो व्यधायि । भूयसा विवरणाद् अनिर्दिष्टानामपि धातूना निर्दिष्टदिशैव पुन पाठफलज्ञान सुकरमिति हि ग्रन्थकर्तुरभिप्रायविशेष । तदुक्त स्वयमेव—

**सरूपा धातव केचिद् अनुक्ता अपि सन्ति चेत् ।**

**सन्तूक्तास्तेऽपि चात्रोक्ता न दुष्यन्त्यन्यसभवे ।।[५] इति।**

**धातूना सकलनप्रकार** —अत्र ग्रन्थकारेण यथासम्भव मातृकाक्रमम् अन्त्यवर्णविषयमाश्रित्यैव धातूना सकलन विहितम् ( वर्णमातृकाक्रमानुसारेण सकलने वर्णानुक्रमसूची विनैवेष्टधातु-

१ दैवश्लोक ५५ । २ दैवश्लोक ११६ । ३ द्र० दैवश्लोक ४१, तद्व्याख्यान च । ४ द्र० दैवश्लोक ११४, तद्व्याख्यान च । ५ दैवश्लोक २०० ।

ढुण्ढने[1] सौकर्यं जायते )। सत्यप्येव भूधातो प्रथम पाठ पूर्वेषामनुरोधेन भूशब्दस्य सत्ताख्यब्रह्मवाचकत्वेन मङ्गलरूपेण वा कृत स्यात्।

## देवस्य परिचय

देवेन स्वीये ग्रन्थे नैतादृश कश्चित् सकेत कृतो येन तद्देशकालादिविषये किञ्चज्ज्ञान भवेत्। अतो देवोऽय कस्मिन् काले क च भूभाग स्वजनुषाऽलचकारेति न याथातथ्येन वक्तु शक्यते, तथापि ग्रन्थोद्धरणपरम्परया यथाऽनुमातु शक्यते, तत्त्वित्थम्—

**काल** –दैवग्रन्थस्य पूर्वसम्पादकेन पण्डितगणपतिशास्त्रिणा देव क्रैस्ताब्दीयस्य नवमशतकस्य द्वादशशतकस्य[2] चान्तराले स्थित इति शक्य कल्पयितुम्'[3] इति सामान्येनोक्तम्। अस्माभिस्तु क्षीरतरङ्गिण्या[4] आरम्भे 'सस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे[5] च देवस्य कालो वैक्रमाब्दस्य द्वादशशत्या उत्तरार्ध (स० ११५०–१२००) इति निर्णीतम्। तदेव सक्षेपत इहाप्युच्यते—

१—क्षीरस्वामी धातुपाठविषयकान् पाणिनीयान् अपाणिनीयाश्च बहून् ग्रन्थान् ग्रन्थकाराश्च स्मरन्नपि नैव क्वचित् दैव देव वा साक्षात् सकेतमात्रेण वा सस्मार। अतो ज्ञायते देव क्षीरस्वामिन पराचीन। क्षीरस्वामिनश्च काल वैक्रमद्वादशशतकस्य पूर्वार्ध (स० ११००—११५०)।

---

१ हिन्दीभाषाया प्रयुज्यमानाया 'ढूढना क्रियाया मूलभूतो ढुढि अन्वेषणे धातु काशकृत्स्नीये धातुपाठे (पृष्ठ २८) उपलभ्यते। स्कन्दपुराणे काशीखण्डे 'अन्वेषणे ढुण्ढि (ढि) रय प्रथितोऽस्ति धातु, सर्वार्थढुण्ढिततया तव ढुण्ढिनाम' इति निर्वचनेऽपि स्मर्यते। ये खल्वर्वाचीनैर्वैयाकरणैर्देशीशब्दत्वेनापभ्रशत्वेन वाभ्युपगता शब्दास्तेषु बहवो मूलभूता विशुद्धा सस्कृतशब्दा सन्ति, अज्ञानात्ते देशीशब्दत्वेनापभ्रशत्वेन वा ख्याति जग्मु। द्रष्टव्यमत्रास्मदीय 'सस्कृत व्याकरण शास्त्र का इतिहास' नामा ग्रन्थ, भाग १ पृष्ठ ४६—४८। २ अर्थाद् विक्रमस्य नवमशतकोत्तरार्धस्य द्वादशशतकपूर्वार्धस्य (८५०—११५०) चान्तराले। ३ दैवम्, भूमिका, पृष्ठ ४। ४ द्र० अस्मत्सम्पादिता, पृष्ठ ३५, ३६ (पाणिनीयो धातुपाठस्तद्वृत्तयश्चेति प्रकरणे)। ५ द्र० द्वितीय भाग, पृष्ठ ८८-८९।

२—दैवस्य व्याख्याता कृष्णलीलाशुकमुनिना स्वकीये पुरुषकार-वार्तिके त्रिषु स्थानेषु तादशो निर्देश कृतो येन ज्ञायते यद्देवो मैत्रेयरक्षितग्रन्थ धातुप्रदीपमनुसृत्य स्वकीय ग्र थ जग्रन्थ। तथा—

क—देवेन तु 'ष्टै वेष्टने स्तायति तिष्टापयति' इति मत्रेयरक्षितोक्तनकारविस्रम्भाम्नायमनुसृत ।[1]

ख—देवेन तु मैत्रेयरक्षितविस्रम्भनादेतदुक्तम् ।[2]

ग—आप्लृ लम्भन इत्यत्र मत्रेयरक्षितेन 'आपयते' इत्यात्मनेपदमप्युदाहृतम्[3] उपलभ्यते। दैववशात्तु तस्य ऽपि नैतदस्तीति गम्यते। तदनुसारेण हि प्रायेण देव प्रवर्तमानो दृश्यते ।[4]

मत्रेयरक्षितेन धातुप्रदीपादयो ग्रन्था ११४० तमवैक्रमाब्दस्य ११६५ तमवैक्रमाब्दस्य चान्तराले विरचिता इत्यस्माभि 'सस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे सुनिपुण निर्णीतम् ।[5]

एव च कृत्वा देवस्य काल सामान्यतया वैक्रमाब्दस्य द्वादशशत्या उत्तराध ( स० ११५०–१२०० ) इति शक्यमूहितुम्।

देश—यतो देवेन मत्रेयविरचित धातुप्रदीपमनुसत्य स्वकीय दैव-प्रकरण निबद्धम्, अत सम्भाव्यते यद्देवोऽपि मत्रेयरक्षितेन समानदेशीय स्यात्। मैत्रेयरक्षितश्च बङ्गदेशीय इत्यस्माभि स्वीये व्याकरणैतिह्ये प्रतिपादितम् ।[6]

इताऽधिक न किञ्चिद् देवविषयेऽस्माभि शक्यते वक्तुम्।

---

१ दैवम्, पृष्ठ २०। २ दैवम्, पृष्ठ २५। ३ धातुप्रदीपे तु सम्प्रति 'आपयति इत्येव पाठ उपलभ्यते। सायणोऽपि धातुवृत्तौ मैत्रेयणापयत इत्यात्मनेपदमपि दर्शितम् इत्युक्तम् (पृष्ठ ३२६)। तेन ज्ञायते सायणसमीपेऽपि धातुप्रदीपस्य तादृश एव कोश आसीद् यादृश कृष्णलीलाशुकमुने सविधेऽवतत। सायणोत्तरकाल केनचिद् धातुप्रदीपस्याय पाठभ्र शो दूरीकृत स्यात्।

४ दैवम, पृष्ठ ८८। ५ स० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ २८३ ( प्र० स० )। ६ स० व्या० शास्त्र का इतिहास, भाग २, पृष्ठ ८५ ( प्र० स० )।

# पुरुषकारवार्तिकम्

देवविरचितस्य दैवग्रन्थस्य विवरणात्मक कृष्णलीलाशुकमुनिना वार्तिकमेक लिखितम् । तदुक्त ग्रन्थकर्त्रा—

**कृष्णलीलाशुकेनैव कीर्तित दैववार्तिकम् ।**[1] **इति ।**

अय च वार्तिकनामा ग्रन्थो दैवसहायीभूत पुरुषकार नाम्ना स्वय ग्रन्थकर्त्रा स्मृत । तथाहि—

**इति श्रीकृष्णलीलाशुकमुनिविरचितो दैवसहाय पुरुषकार समाप्त ।**[2] **इति ।**

यथा लोके दैव न पुरुषकारसहायमन्तरेण फलप्रदातृ सम्पद्यते, अपि च क्वचिद् बलवान् पुरुषकारो दैवमप्यतिवर्तते[3], एव स्थाने स्थान उक्तानुक्तदुरुक्तचिन्ता विदधद् वार्तिकनामा पुरुषकारोऽपि क्वचिद् दैवग्रन्थमतिवतते । **भवते शपि तत्रैव**[4] इत्यस्य व्याख्या कुवन् दैवपाठम्यास।धुत्व च प्रतिपादयन् ग्रन्थकारो ब्रवीति—**एव च 'शपि तत्रैव भवति' इति पठितु युक्तम् ।**

**अन्यत्राप्येवमुन्नेतुम् उचित पाठपाटवम् ।**
**बली पुरुषकारो हि दैवमप्यतिवर्तते ।।**[5] **इति ।।**

एतेन ग्रन्थकर्त्रा '**दैवसहाय पुरुषकार**' इति यदुक्त तत्सर्वथा युक्तम् । अत एवाय ग्रन्थो लोके पुरुषकारनाम्नैव प्रसिद्धि गत ।

## परिचयः

श्रीकृष्णलीलाशुकमुनिर्वैष्णवसम्प्रदायस्याचार्य । **अस्य** कृष्णकर्णामृत कृष्णलीलामृत वा स्तोत्र वैष्णवेष्वतिप्रसिद्धम् ।

---

१ दवम्, पृष्ठ ११८ । २ दवम् पृष्ठ ११६ । ३ रामायणेऽप्युक्त रामभद्रण—'दैवसम्पादितो दोषो मानुषेण मया जित ।' (युद्ध ११५।५) इति । 'बली पुरुषकारो हि दवमप्यति वतते' इत्याष्टङ्गहृदये (शारीर १।३८) ऽप्युच्यते । ४ दैवश्लोक ३ । ५ दैवम्, पृष्ठ ११ ।

**काल**—कृष्णलीलाशुकमुने क काल इति नास्ति कश्चिन्निश्चिय । अतस्तस्य कालनिर्णयाय यानि सहायकानि प्रमाणानि तान्युच्यन्ते—

१—पुरुषकारे हेमचन्द्राचाय त्रि स्मयते ।[१] हेमचन्द्रस्य च ग्रन्थलेखनकाल ११६० वैक्रमाब्दात् १२२० वैक्रमाब्दपर्यन्तमिति निश्चितप्रायम् । अत इय पुरुषकारस्य पूर्वा सीमा ।

२—निघण्टुव्याख्यात्रा देवराजयज्वना पुरुपकारस्य नामनिर्देश विना द्वयोः स्थानयो पाठ उद्धृत ।[२] देवराजीय निघण्टुभाष्य सायणेन १।६२।३ ऋग्भाष्य उद्धृतम् ।[३] अतो देवराजस्य वैक्रमाब्दस्य चतुर्दशशत्या उत्तराध ( १३५०—१४०० ) काल इत्यैतिह्यविद सगिरन्ते । इय पुरुषकारस्यावरा सीमा ।

३—कृष्णलीलाशुकमुनि स्वव्याख्याने बहुत्र दैवस्य पाठान्तरमप्युपन्यस्यति । दैवस्य काल १२०० वैक्रमाब्द इत्यनुमित पुरस्तात् । दैवग्रन्थे पाठान्तरोत्पत्तावपि कश्चित् काल अपेक्षत एव । स च न्यूनान्न्यून पञ्चाशद्वर्षमित आवश्यक ।

एतै प्रमाणै सामन्यतयेदमेव शक्यते वक्तु, यत् पुरषकारस्य रचना १२५० वैक्रमाब्दात् १३५० वैक्रमाब्द यावत् कदाचिद् बभूव ।

**सीतारामजयरामयोर्भ्रान्ति**—'सस्कृत साहित्य का सक्षिप्त इतिहास' नाम्नो ग्रन्थस्य लेखकाभ्या सीतारामजयरामाभ्या कृष्णलीलाशुकमुने काल ११५७ वैक्रामाब्दो निर्दिष्ट । स चासमीचीन इत्युपरितनप्रमाणैर्विस्पष्टमेव ।

**देश**—कुत्रत्य खलु कृष्णलीलाशुकमुनिरित्यत्र न किञ्चिदपि विनिगमक प्रमाणमुपलभ्यते । बहव एन बङ्गदेशीयमाहु । यथा तु पुरुषकारान्ते

---

१ पुरुषकार पृष्ठ १६, २१, ३३ । २ 'क्षप प्रेरणे' इत्यारभ्य 'धातुवृत्तौ पठ्यते' इत्यन्तः । पृष्ठ ४३, १०६ । अय पाठ दैवपुरुषकारे ८८ अष्टाशीतितमे पृष्ठ वतते । ३ 'उस्राशब्दात् स्वार्थे पृषोदरादित्वेन घ-प्रत्यय' इति निघण्टुभाष्यम् । अय पाठो देवराजीये निघण्टुभाष्य उस्रियापदव्याख्यान ( २।११।१३ ) उपलभ्यते ।

काञ्चीति काञ्चनपुरी प्रथिताद्भुतश्री,
काभिश्चिदुत्सवविभूति परम्पराभि ।
चेत स्थिति च जगतामधिवासयन् वो,
विजयाय भूयात् ॥

इति पद्यमुपलभ्यते, तथाऽय काञ्चीपुरवासी दाक्षिणात्य इति शक्यते ऽभ्यूहितुम् ।

**पाण्डित्यम्**—पुरुषकारवार्तिकालोचनया इद निस्सशय शक्यते वक्तुम्, यदय कृष्णलीलाशुकमुनि शब्दशास्त्रे वेदान्ते साहित्ये च पर निष्णात आसीत् । अनेन स्वकीये लघुकलेवरे वार्तिके यावन्तो ग्रन्थकारा ग्रन्था वा नामोल्लेखपूवक विना नामग्रहण वा निर्दिष्टास्तैरस्यानेकविषयक व्यापक पाण्डित्य हस्तामलकवत् प्रत्यक्षीभवति ।

**अन्ये ग्रन्था**—कृष्णलीलाशुकमुनिना विरचिता इमेऽन्ये ग्रन्था —

१—**सुप्पुरुषकार**—सायण सुब्धातुव्याख्याने पुरुषकारनाम्ना पाठमेकमुद्धरति—

तदुक्त पुरुषकारे—**बहयतीत्युदाहृत्येष्ठुनि यत् दृष्ट कार्य तदप्यतिदिश्यते, न चेष्ठुनि यिट् नापीष्ठवद्भावश्च । यिट्सन्नियोगशिष्टत्वात् तदभावे तु भावयतीति चिन्त्यमाप्तैरिति** । धातुवृत्ति पृष्ठ ४२८ ।

नैष पाठो मुद्रिते पुरुषकारे दृश्यते । अतो ज्ञायते कृष्णलीलाशुकमुनिना कश्चित् सुब्धातुव्याख्यात्मकोऽपि पुरुषकारनामा ग्रन्थो विरचित इति ।

२—**सरस्वतीकण्ठाभरणव्याख्या**—कृष्णलीलाशुकेन भोजदेवीयस्य सरस्वतीकण्ठाभरणनाम्न शब्दानुशासनस्य पुरुषकारनाम्नी व्याख्यैका विरचिता । एतद्विषयेऽस्मदीयो व्याकरणैतिह्यग्रन्थो ऽवलोकनीय ।[1]

एतदपि सभाव्यते सायणेन पूर्वनिर्दिष्ट पुरुषकारपाठ सरस्वतीकण्ठाभरणव्याख्यात उद्धृत स्यात् । अस्य निर्णयस्तु सरस्वतीकण्ठाभरणटीकादर्शनादेव भवितु शक्य ।

---

१ स० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ ४४५—४४६ प्र० स० ।

३—**कृष्णलीलामृतम्**—इद स्तोत्रम् ।

४—**अभिनवकौस्तुभमाला**, ५—**दाक्षिणामूर्तिस्तव**—दैव-सम्पादकस्य गणपतिशास्त्रिणो मते इमावपि ग्रन्थौ श्रीकृष्णलीलाशुक-मुनेरेव कृती स्त । अनयोरप्यन्ते—'इति **कृष्णलीलाशुकमुनि** ' इत्यादि पुरुषकारसदृश एव पाठ उपलभ्यते ।[1]

**माधवीयधातुवृत्ते प्रधानाश्रयीभूत**—सायणविरचितमाधवीय-धातुवृत्ते क्षीरतरङ्गिणी-धातुप्रदीप-दैव-पुरुषकार-प्रभृतिग्रन्थाना चानुशीलनेनैतद् व्यक्त भवति यत्तस्या प्रधानसहायीभूतौ द्वावेव ग्रन्थौ स्त । एको मैत्रयविरचितो धातुप्रदीप, अपर कृष्णली-काशुकमुनिविरचित पुरुषकार । यद्यपि सायणो यत्र तत्र क्षीरस्वामिन तदीया क्षीरतरङ्गिणी च बहुश उद्धरति तथाप्यु-क्ताना त्रयाणा ग्रन्थानाम् आलोचनयैतद् अनुमीयते यत् सायण क्षीरस्वामिन क्षीरतरङ्गिणीवृत्ति न साक्षादुपलब्धवान् । स सर्वत्र पुरुषकारमुखेनैव क्षीरस्वामिन पाठ मत वा विज्ञाय तथा स्मरति । यतो माधवीयधातुवृत्तौ क्षीरस्वामिनस्तादृशा एव पाठा उद्ध्रियन्ते यादृशा कृष्णलीलाशुकमुनिना पुरुषकारे निबद्धा । पुरुषकारोद्धृताश्च बहव पाठा क्षीरतरङ्गिणीपाठेभ्यो विवदन्ते । एतद्विषयेऽस्माभि-र्यथास्थान टिप्पणीषु सकेत कृत ।

**भट्टोजिदीक्षितोऽपि** क्षीरस्वामिनो यान् पाठान् **प्रौढमनो-रमायामुद्दधार** तेऽपि **माधवीयधातुवृत्तिमुखेन पुरुषकारमुखेन** वा विज्ञाय निर्दिष्टा, न सोऽपि साक्षात् क्षीरस्वामिग्रन्थमवलोकितवान् । एतद्विषयेऽपि तत्र तत्र यथास्थान टिप्पण्योऽवलोकनीया ।

## अस्मदीय सस्करणम्

अस्मत्सस्करणस्य आधारभूत तु श्रीपण्डितगणपतिशास्त्रि-सम्पादित पूर्वसस्करणमेव वतते, पुनरप्यस्माभिरेतस्मिन् सस्करणे बहुत्र बहुविध वैशिष्टच विहितम् । यथा—

१ गणपतिशास्त्रिसस्करणम्, भूमिका पृष्ठ ४ ।

उक्त कथनकी भाषाको बदलकर मै इस ढगसे रखना चाहूँगा

यदि वे केवल शिक्षा, गरीबोकी डाक्टरी सेवा, और ऐसे ही मानव दयाके कामोतक सीमित रहनेकी बजाय, अपने इन कामोका उपयोग धर्म परिवतनके लिए करेगे, तो मै अवश्य ही यह चाहूँगा कि वे चले जाये। हरएक राष्ट्र अपने धमको दूसरे किसी राष्ट्रके धम जितना ही अच्छा समझता है। भारतवासी जिन महान धममे आस्था रखते है, वे निश्चय ही उनके लिए पर्याप्त है। भारतको एक धमसे दूसरे धममे परिवतनकी कोई आवश्यकता नही है।

इस सक्षिप्त कथनको अब मै विस्तारसे समझाऊँगा। मै मानता हूँ कि मानव दयाकी आडमे किया गया धम-परिवतन यदि और कुछ नहो तो हानिकर अवश्य है। यहाके लोगोको इससे निश्चय ही चिढ है। धम आखिर एक अत्यत व्यक्तिगत चीज है, वह हृदयमे सम्बन्धित है। किसी ईसाई डाक्टरने मेरे रोगका इलाज करके मुझे स्वस्थ कर दिया, सिफ इसीलिए मुझे अपना धम क्यो बदलना चाहिए? या जब मै उस डाक्टरका इलाज करा रहा हू, तब खुद वह मेरे धम-परिवतन करनेकी अपेक्षा क्यो करे या वह मुझे ऐसी सलाह क्यो दे? डाक्टरी सहायता क्या अपने आपमे साथक नही है और क्या उतनेसे ही चिकित्सकको सतोष नही हो जाता? या यदि मै किसी मिशनरी शिक्षा सस्थामे पढ रहा हूँ, तो मुझपर ईसाई धमकी शिक्षा क्यो थोपी जाये? मेरी रायमे तो इन तरीकोसे उन्नति नही होती, और यदि गुप्त विरोध नही, तो ये सन्देह अवश्य पैदा करते है। धम-परिवतनकी रीतियोमे 'सीजरकी रानीकी तरह सन्देहकी जरा भी गुजाइश' नही होनी चाहिए। धम पार्थिव चीजोकी तरह नही दिया जाता। वह तो हृदयकी भाषा द्वारा दिया जाता है। यदि मनुष्यमे कोई जीवित धार्मिक आस्था है, तो वह गुलाबके फूलकी तरह अपनी सुगन्ध फैलाती है। अदृश्य होनेके कारण, फलकी पखुडियोकी रगीन छटाकी अपेक्षा उसका प्रभाव कही अधिक व्यापक होता है।

अत मै धम परिवतनका विरोधी नही हूँ, परन्तु उसकी वतमान रीतियोका विरोधी हूँ। धम-परिवतनने आजकल और वस्तुओकी भाति एक व्यापारका रूप ग्रहण कर लिया है। जहातक मुझे याद है, एक मिशनकी रिपोट मैने पढी थी, जिसमे धम-परिवतनका प्रति व्यक्ति खच बताकर 'अगली फसल'के लिए बजट पेश किया गया था।

मै बेशक यह कहता हूँ कि भारतवषके लिए उसके महान धम पर्याप्त है। ईसाई और यहूदी धर्मोके सिवा, हिन्दूधम और उसकी शाखाएँ, इस्लाम और पारसी धम, ये सब जीवित धम है। ससारका कोई भी एक धम सम्पूण नही है। और सब धम उनके अपने अपने अनुयायियोको एक-से प्रिय है। इसलिए जरूरत आज इस बातकी नही है कि हर सम्प्रदाय अपने धमको दूसरे सब धर्मोसे श्रेष्ठ सिद्ध करनेका निरथक प्रयत्न करे और इस प्रकार विरोध पैदा करे, बल्कि इस बातकी है कि जगतके महान धर्मोके अनुयायियोमे सजीव और मैत्रीपूण सम्पक पैदा किया जाये। इस प्रकारके मत्रीपूण सम्पकसे हम सब अपने-अपने धर्मोकी त्रुटियो और दोषोको दूर कर सकेगे।

## धन्यवादार्हा

एतद्ग्रन्थप्रकाशनकर्मणि यैर्यथाकथंचिदपि साहाय्य व्यधायि तेषु

१—गीर्वाणवाणीसमुपासको देहलीनिवासी वैद्यप्रवरो वैयाकरणस्तत्र भवान् भीमसेनशास्त्री प्रथम धन्यवादमर्हति, येन महानुभावेनास्य दुर्लभस्य ग्रन्थस्य प्रकाशनाय पञ्चशतमुद्रा 'अर्धतृतीयवर्षानन्तर प्रतिदेया' इत्येवरूपेण प्रदत्ता। एव चैतदन्महानुभावस्योत्साहवर्धनेनैवा ऽयम् उपत्रिंशद् वर्षेभ्यो दुर्लभो ग्रन्थ पुन सुलभो ऽभूत्। अत सर्वेषामपि देववाणीसमुपासकाना विशेषतो वैयाकरणानामय महानुभावो धन्यवादार्ह।

२—अस्य दुर्लभस्य ग्रन्थस्य प्रतिलिपिरस्माभिर् 'अजयमेरु' नगरस्थाया श्रीमतीपरोपकारिणीसभाया पुस्तकालये विद्यमानात् त्रिवेन्द्रममुद्रितग्रन्थाद् एकोत्तरद्विसहस्रे (२००१) वैक्रमाब्दे आश्विनमासे कृताऽऽसीत्। यतस्तदानीन्तनै परोपकारिणीसभामन्त्रिभि श्रीहरविलासशारदामहोदयैरस्य ग्रन्थस्य प्रतिलिपिकरणायाऽनुज्ञा प्रत्ताऽऽसीत् तयैव च प्रतिलिप्याऽस्य पुनर्मुद्रणमभूद्, अतस्ते स्वगता अपि महानुभावा कृतज्ञतापूर्वकमिदानी स्मर्यन्ते। सम्प्रति च स्वलिखितपुस्तकपाठशोधनाय पुनस्तदेव मुद्रित पुस्तकमिदानीन्तनानामधिकारिणा सौहार्देनोपलब्धमतस्ते ऽप्यस्माक धन्यवादार्हा।

३—नेशनलप्रेसस्वामिभिर् 'घीसाराम' महोदयैर्महता प्रयत्नेन प्रेम्णा चाय ग्रन्थो मुद्रितो ऽत इमेऽपि महानुभावा धन्यवादार्हा।

**विशेष**—टिप्पण्या यत्र यत्र परिभाषावृत्ति ग्रन्थस्य सकेत कृत स सीरदेवीयो ज्ञेय।

| | |
|---|---|
| भारतीय-प्राच्यविद्या-प्रतिष्ठान<br>२४/३१२ रामगज अजमेर | विदुषा वशवद —<br>युधिष्ठिरो मीमासक |



ओम

देव-कृत

# दैवम्

कृष्णलीलाशुकमुनिविरचित-

## पुरुषकाराख्यवार्तिकोपेतम्

**सच्चित्सुखैकरसवस्तुनि यत्र विश्व**
**मिथ्यैव रूप्यमिति राजति शुक्तिभित्ते ।**
**तस्मिन् प्रतीचि परमात्मनि चित्तवृत्तिर्**
**ब्रह्माहमस्मि परमित्यनिश ममास्तु ॥ १ ॥**

गाश्च विबुधाश्च भूमौ पालयितु किमपि कृतपदन्यासम् ।
आपादचूडमिदमिदमभ्यस्यत दैवमद्भुत भोभो ॥

अपिच—
दैव पुरुषकारेण न विना पुष्टिमश्नुते ।
अत प्रेक्षावता सार्थास्तमेतमनुधावत ॥

तत्र तावद्यथावच्छब्दार्थप्रतिपत्त्या निष्प्रत्यूह परिसमाप्य यथासम्भव प्रचयगमनादिना परोपकारप्रभृतिप्रयोजनमात्मनोऽन्येषामप्यमु प्रबन्धमनुबध्नतामलसमनसामप्याद्यपद्यप्रभावेनैव यथा स्याद् इत्येवमर्थ मङ्गलाचरणमग्रे निबन्धनस्य निवेशयति—**सच्चित्सुखेति** । तत्र च ब्रह्मतत्त्वप्रतिसन्धानस्य समस्तेषु मङ्गलेषु मूर्धाभिषिक्तत्वाच्छब्दस्य च शब्दतत्त्वविद्भिर्ब्रह्मत्वेनाभ्युपगमात्[१] तस्यैव चात्रापि

१ द्रष्टव्यम्—द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म पर च यत् । शब्दब्रह्मणि निष्णात पर ब्रह्माधिगच्छति ॥ मैत्रा० आर० ६।२२, महा० शान्ति २३२।३२ ॥

भवत्या[१] ह्यात्मना प्रतिपाद्यत्वात् स्वस्य च ब्रह्मनिष्ठत्वाद् ब्रह्मतत्त्व-विषयमेव मङ्गलमौचित्यातिरेकादाचरित मन्तव्यम्। मङ्गलाचरणस्य पुनर्यथोक्तफलसाधनत्वम्—

'मङ्गलाचारयुक्ताना नित्य च प्रयतात्मनाम्।
जपता जुह्वता चैव विनिपातो न विद्यते ॥'[२]

इत्यादिस्मृते शिष्टाचाराच्च द्रष्टव्यम्। अविनिपातश्चात्रभिमतात् फलादप्रच्युतिरेव। अपि चात्र 'सिद्धे शब्दार्थसम्बन्धे'[३], इत्यत्र तत्रभवत **पतञ्जलेर्भाष्य**–'माङ्गलिक आचार्यो महत शास्त्रौघस्य मङ्गलार्थ सिद्धशब्दमादित प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीर-पुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च। अध्येतारश्च सिद्धार्था यथा स्यु' इति। 'वृद्धिरादच्'[४] इत्यत्र च 'माङ्गलिक आचार्यो महत शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादित प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च। अध्येतारश्च वृद्धियुक्ता यथा स्युरिति' इति। 'भूवादि'[५] सूत्रे च 'माङ्गलिक आचार्यो महत शास्त्रौघस्य मङ्गलार्थ वकारागम प्रयुङ्क्ते। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च। अध्येतारश्च मङ्गलयुक्ता यथा स्युरिति' इति। अत्र च मङ्गलप्रयोजनो माङ्गलिक। तत्र च यथाभाष्य यथाचार च मङ्गलादित्वमेव तत्तत्कार्याणामावश्य-कम्। शेषयो पुनर्नावश्यकता। अविगुणमङ्गलानामभिमतफलभङ्ग-मुपलभामहे, तच्चैव प्रबलतरदुरितप्रतिबन्धादेवेत्यनुसन्धेयम्। इत्यास्ता नास्तिकवादावतारावसर।

---

१ अत्रापि दैवग्रन्थ इत्यर्थ। 'सत्ताया भवति' (श्लोक ३) इत्यादिरूपेण।

२ मनु० ४।१४६। अभिलषितायुर्धनादिसिद्धिर्मङ्गलम्, तदर्थमाचार (= मङ्ग-लाचार) इति मेधातिथि।

३ महा० अ० १, पाद १, आह्निक १, वार्तिकव्याख्याने।

४ अष्टा० १।१।१, सूत्रभाष्ये। ५ अष्टा० १।३।१, सूत्रभाष्ये।

अत्र च परमार्थस्वप्रकाशभूतसुखमात्रस्वरसे[1] यस्मिन् वस्तुनि शुक्तिशकल इव रूप्य मिथ्यैव जगत् प्रकाशते, नतु प्रतीच इव चतन्यमन्यद्रूपमस्यास्ति तस्मिन् प्रत्यग्भूते परमात्मनि 'पर ब्रह्माहमस्मि' इत्यनिश मम चित्तवृत्तिर्भूयात् इत्यक्षरार्थ । यदेवविधपरमात्माख्यमात्मन स्वत स्वरूपमविद्यातिमिरदुष्टदृष्टेरन्यथाऽन्यथावभासते तत् तथैव मम तत्त्वविद्यासिद्धाञ्जनवशादनिश प्रकाशतामिति यावत् । तत्रापि प्रत्यक्परमात्मापरपर्यायस्य ब्रह्मण स्वरूपतटस्थलक्षणोपवर्णनद्वारा परमपुरुषार्थरूपोपदर्शनेन चित्तवृत्ते स्वयवराहविषयावेदनपराणि परमात्मनीत्येव पर्यन्तानि पदानि वेदितव्यानि तत्र च विश्वाधिष्ठानत्व तटस्थलक्षण रजताधिष्ठानत्वमिव शुक्ते । शेष पुन स्वरूपलक्षण यथा शुक्तेरेवासाधारण रूपम् । तत्र सुख तावत् पुरुषार्थ एवेति सुप्रसिद्धम् । चिच्छब्देन तु तस्यैव साक्षात्कार स्वयप्रकाशतया प्रकाशित । सुखानुभवो हि पुरुषार्थ स चैकरसत्वेनाद्वैतत्वेन स्वय प्रकाशनयैव पर्यवस्यति, अपरथा प्रकाशान्तराभावेनाननुभवादपुरुषार्थतापातात् । यद्यपि 'सुख मे स्याद्' इत्येव पुरुषार्थं पुरुषा अर्थयन्ते, न तु सुखमह स्यामिति, तथापि सासारिकस्य सुखस्य जडाजडाकारद्वयकरम्बितस्य जडाकारसाक्षात्कारनान्तरीयकतया भेदसभेदेऽपि पुरुषार्थकोटिनिविष्ट इवावभासते । मोक्षसुखस्य तु साक्षात्काराय स्वयप्रकाशतैव भगवती प्रभवतीति किमपरमपेक्ष्यत इति कृतमेतेन भेदतपस्विना । सच्छब्देन पुन सैवैषा पुरुषार्थता समर्थिता । यदि खल्वेवविधमपि सुख विश्ववन्मिथ्यैव स्यात्, तदा तदपि पुरुषार्थाभास एव भवेत्, न च भवेत् प्रेक्षावता प्रवृत्तिपात्रम् । आत्मन खल्वत्यन्तोच्छेदाद् वर ससार एवानशनादिव कदशनम् । एकरसशब्देन तु तस्यैव सुखस्य दुखासम्भिन्नता प्रदर्शिता । सच्चित्सुखैकरसमेव तद्वस्तु, न पुना रूपान्तरमन्यथान्यथावभासमानस्यापि अस्यास्तीत्यद्वैतात्मकतयाऽकुतोभयता च । तथा च श्रूयते—'यन्मदन्यन्नास्ति । कस्मान्नु बिभेमि'[2] इति । 'कस्माद्ध्य[2]-

१ 'स्वरूपे' पाठा० ।        २ बृह० उ० १।४।२॥

भेष्यद् द्वितीयाद् वै भय भवति, इति च। यद् भय भवति तद् द्वितीयादेवेत्यद्वैते भयस्य न सम्भावनापीत्यर्थं । वस्तुशब्देन पुनवक्ष्यमाणाविद्यावृत्त[1]प्रतिपत्तिसौकर्योपयोगितया सच्चित्सुखैकरसत्वस्य वस्तुवृत्तमुपन्यस्तम्[2]। यद्येवमद्वैतमेवैकरसतया वस्तु स्यात्, कथ र्तार्हि प्रत्यक्षादिभिद्वैत प्रकाशत इत्याशङ्काङ्कुरशमनेन यत्रेत्यादिना द्वैतमिथ्यात्वकथनेन तदेवाद्वैत साधु साधितम्। तेन च देशत कालतो वस्तुतश्चानवच्छिन्नतया पुरुषार्थकाष्ठा प्रतिष्ठापिता। तेनैव च द्वैतमिथ्यात्वकथनेन निखिलस्य दु खस्य तद्धेतोश्चाविद्यापयन्तस्य विद्याख्यया चित्तवृत्त्या विनिवृत्ति सूत्रिता। विद्याविनिवृत्त्योश्चैवमविद्योत्थत्वाविशेषाद्विनिवृत्ति सूत्रितैव। अविद्यावस्थायामेव ह्यमी निवत्यनिवतकनिवृत्तिविभ्रमा परिभ्रमन्तस्तत्त्वावस्थाया कथ कथामप्यहन्ति। अद्वैतविद्या खल्विय कृत्स्न द्वैतमेव ग्रसमाना स्वात्मान च तत्तन्निवृत्तीश्च द्वैतोपाधौ युगपदेव ग्रसत इति किमपरमवशिष्यते। अपरथा च 'पूर्णमेवावशिष्यते'[3] इत्याम्नायशासनमतिलङ्घ्येत, अद्वैत चोपक्रम्य द्वैतमेव भङ्ग्यन्तरेणोपसहृत स्यात्, कैवल्यप्रसिद्धिश्च कदर्थिता भवेत्, पुरुषाथश्च न काष्ठामधितिष्ठेत्। तदेव तत्त्वविद्यावाप्तनिजपदाभिषेकस्य न द्वैतानुबन्धगन्धोऽप्यस्ति, किन्तु निरन्तरमनन्तानन्दसाम्राज्यमेव त्वमप्रभवमप्रतिबन्ध चकास्ति। तथा च समन्वयसूत्र[4] शास्त्रतात्पर्यविदा[5] वचनम्—'अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य'[6] इति। अथ प्रतीचि इत्यनेन यथोक्तस्य पुरुषार्थस्य प्रत्यासन्नता प्रत्यायिता। प्रतीचश्च परमात्मसामानाधिकरण्येन जगद्वैलक्षण्य वर्णितम्—जडस्य हि जगतो मिथ्यैव रूप रूप्यवद्रूपान्तराभावात्, प्रतीचस्तु जीवस्वरूपमेव मिथ्या, चिद्रूप तु परमात्माऽव्यतिरेकात् सत्यमेवेति। अनेन च वैलक्षण्येन यथोक्तस्य

१ वृत्तशब्द स्वरूपे। स चेह मिथ्यात्वरूप। 'वृत्त स्वरूपे चरिते' इति वैजयन्ती, पृष्ठ २३६। २ स्वाभाविकरूप पारमार्थिकत्वलक्षणम् इत्यथ।
३ ईशोपनिषदारम्भे शान्तिपाठ। ४ वेदान्त १।१।४॥
५ शङ्कराचार्याणामिति भाव। ६ वेदान्तशाकरभाष्य १।१।४॥

वस्तुन पुरुषार्थतैव पूववत् समर्थिता, प्रतीचो हि जीवात्मन परमात्मव्यतिरेके विश्वकोटिनिविष्टतया सोऽपि मिथ्यव स्यादिति कस्याय परमात्मभाव पुरुषार्थो भवेत्, 'फल्यभावे फल कुत' इति न्यायात् । अनेनैव च सामानाधिकरण्येन साक्षिब्रह्मणोस्तात्त्विकैक्य-कथनार्थेन 'अह ब्रह्मास्मि'[1] इति चित्तवृत्तेर्मिथ्यात्वविनिवृत्तये तत्त्वज्ञानतापि विज्ञापिता । यद्यपि[2] तस्मिन् प्रतीचीत्यनेनैव सामाना-धिकरण्येन जीवब्रह्मणोरैक्य शक्यमवसातु तथापि यथा परमात्मश-ब्दाद् ब्रह्मावगम सुकरतरो भवति, न तथा तच्छब्दात् । नित्यप्राप्त-स्याप्यविद्यावशाद् विस्मृतपाणिमाणिक्यवदप्राप्तस्य प्राप्तौ चित्तवृत्तिरि-त्यादिना तत्त्वसाक्षात्कारात्मकमायासविमुक्त साधनमुक्तम् । पर-मित्यनेन च सदित्यादिना दर्शितस्य निरतिशयोत्कर्षस्य प्रतिपत्त्यव-स्थायामप्यनुवृत्तिरावेदिता, तद्विषयाया एव विद्याया अविद्योत्पाटन-पाटवात् । एव च निरतिशयानन्दसाक्षात्कारात्मकतया स्वविषयस्येव स्वयमपि पुरुषार्थत्वमस्याश्चित्तवृत्तेर्न स्वविद्यानिवृत्तेरेवेत्यप्यादर्शितम् । तदहो तत्त्वविद्याया माहात्म्य, यत् स्वसाध्यवत् स्वय च स्वविषयश्च पुरुषाथभूयमेवावगाहते । अनिशमित्यनेन पुनरर्वाचीन रसास्वादम-वधीय परस्यैवास्य रसस्य रसिकास्वाद्यता द्योतिता । यस्य हि तत्त्वस्य सकृदपि स्मृति सकलकामधेनुर्भवति, कि पुनस्तस्य निरन्तरानुसन्धा-नमिति सूचितम् । तच्च मङ्गलाचरणभूयस्त्वादभिमतफलभूयस्त्वा-यैवेत्येषा दिक् ।

येऽप्येतत् पद्य न पठन्ति,[3] तन्मतेऽपि वृत्तिकारा[4]दिवत् प्रबन्धाद् बहिरेव मङ्गलाचरण बोद्धव्यम्, 'मङ्गलाचारयुक्तानाम्' इत्यविशेषेण

---

१ बृह० उप० १।४।१०॥           २ 'यद्यपि च' पाठा० ।

३ अनेन विज्ञायते व्याख्याकारकाले दैवग्रन्थ पाठभेदादिना व्याकुलित इवास । उक्त च चतुर्थश्लोकव्याख्याना ते चतुर्थश्लोकपाठभेदमुद्धृत्य ग्रन्थकारेण— "इति पाठभेदेऽपि न फलभेद । अत एवविधाः पाठभेदाः पाठाऽभेदेऽपि वा पौर्वापर्यभेदा नैवाभिधायिष्यन्ते ।'       ४. काशिकाकारादिवदित्यर्थ ।

स्मरणात्। अपि चास्मिन्नपि पक्षे 'सत्ताया भवति'[१] इत्यत्रैव महन्मङ्गलमाचरिष्यतीति[२] न किंचन दुष्यति।

सर्वथापि तावत् प्रेक्षावत्प्रवृत्तिसौकर्यार्थं करिष्यमाण वस्तु निर्दिशन् प्रकरणस्य प्रयोजन दर्शयति—

**पठितस्य पुनः पाठे फल वृत्तेन वक्ष्यते।**
**न विना वृत्तबन्धेन वस्तु प्रायेण सुग्रहम् ॥ २ ॥**

इति। एकस्यैव धातोरसकृत्पाठे यत् फल तत् तत्र तत्र तत्तद्-ग्रन्थकारैरुक्तमप्यस्माभिरेकीकृत्य वृत्तेन वक्ष्यते। यद्यपि च 'धूनयति धवति धवते'[३] इति जात्यापि वक्ष्यते, तथापि 'भूयसा व्यपदेशो मल्लग्रामवत्' इति न्यायेन वृत्तेनेत्युक्तम्। तत्र च वर्णच्छन्दो वृत्तम्, मात्राच्छन्दो जाति। यद्येव पद्येनेत्येव मुक्तकण्ठमुच्यता, मुच्यतामय भूयसाव्यपदेशक्लेश। सत्यम्, वृत्तसौभाग्यात् पुन पद्यबन्ध श्लाघ्यतरो भवतीत्यभिप्रेयते। तथा चाचार्यदण्डिना दर्शितम्—'श्रव्यवृत्तै सुगन्धिभि'[४] इति। वृत्तबन्धान्तराले त्वार्याप्रवेश स्थायिरसान्तर इव सञ्चारिरसप्रवेशश्चम्पकमालान्तराल इव च नीलपलाशप्रवेशो रसिकाना मानसमनुरुन्ध एवेत्यभिसन्धि। तथा चात्रैवानुष्टुब्बन्धान्तराले 'जानातीति श्नि सिध्येद्'[५] इत्यादिवृत्तान्तरप्रवेशोऽपि दृश्यते वृत्तरत्नाकरादिवद्वा वृत्तशब्द पद्यमात्रपर इति यथोक्तनिर्वाहालसैराश्रीयताम्। अथ किमर्थं धातुवृत्तिकारादिवचनभङ्गी विलङ्घ्य वृत्तेन वचने भवान् अभिनिविशते, एव च क्वचित् क्वचित् पादपूरणाय पदविन्यासप्रयासोऽपि परिहृतो भवतीत्यत उक्त न विनेति। अत्रापि यथोपक्रम वृत्तेनेत्येव वक्तव्ये बन्धग्रहण बन्धविशेषभूषितस्यैव वृत्तस्य वस्तुन सुग्रहत्वे हेतुत्वात्। एव च 'वृत्तन वक्ष्यते' इत्यत्रापि वृत्तबन्धेनेत्येवार्थं पर्यवस्यति। ग्रहिश्चात्रावधारणपर्यन्ते ग्रहणे वर्तते। अथ यत्र सहितया पाठे वाक्यभेदो दुर्ग्रहो भवति यथा—'एग्रोडैग्रौज्झय-

१ दैवश्लोक ३। २ दैवग्रन्थकार इति शेष। ३ दैवश्लोक २६। ४ काव्यादर्श १।१८॥ ५ दवश्लोक ८।

वरलण्ञमङणनझभञ्घढधष' इत्येतस्मिश्चन्द्रगोमिभोजदेवयोगद्यप-द्यसाधारणे[1] सूत्रपाठे, तत्र पद्यबन्धे सति वस्त्वपि वाक्यार्थात्मक गद्यबन्धवदथवशादनन्तरान्तरा विच्छिद्य पाठस्यासम्भवाद् दुग्रहमेव, दूरत एवावधारणम्, गद्यबन्धे च सति तत्सम्भवात् सुग्रहमेवेत्यभि-प्रायेणोक्त प्रायेणेति । तदनेनासकृत्पाठफलस्य क्रीकृत्याकृच्छ्रेण ग्रहणमस्य प्रकरणस्यासाधारण प्रयोजनमिति दर्शित भवति ।।

तदेव करिष्यमाण वस्तु सप्रयोजनमुपक्षिप्य तत्रापि 'भू सत्ता-याम्' इति धातुपाठे प्रथमपठित भधातु मङ्गल चावलम्ब्य पुन-पाठफल ब्रुवन् प्रकरणमारभते—

**सत्ताया भवति प्राप्तौ णिचि भावयते तङि ।**
**भवते शपि तत्रैव भावयत्यवकल्कने ।। ३ ।।**

तत्र च सत्ताशब्देन सच्छब्दवाच्य महान्तमात्मान 'वृद्धिरादैज्' इति वृद्धिशब्देनेव वृद्धिमादावनुसरता प्रकरणारम्भोपयोगि मङ्गल-मप्याचरित मन्तव्यम् । उक्त च भर्तृहरिणा—

'सबन्धिभेदात् सत्तव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्या सर्वे शब्दा व्यवस्थिता ।।
ता प्रतिपदिकार्थ च धात्वर्थ च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादय ।।[2]

इति । यदा तु सच्चिदित्यादिना वा बहिरेव वा प्रागेव मङ्गलमाचरित, तदात्र सत्ताशब्दस्य माङ्गलिकत्व मा वा भूद्, भवतु वा काम फलभूयस्त्वाय । एव मध्येऽपि 'सिद्धयेत्'[3] जयेद्'[4] इत्या-दिभिरन्तेऽपि वृद्धिभाषाशब्दाभ्या[5] मङ्गलाचरण काम व्याख्येयम्, 'वाग् वाणी भारती भाषा'[6] इति भाषाशब्दस्यापि भगवत्या सरस्वत्या व चकत्वात् । सवथाऽपि धातूनामनेकाथत्वाद् मृद कुम्भो

१ एषा षट्सूत्री सहितापाठे जातिभवति, पृथक पाठे च गद्यरूपिणी ।
२ वाक्यपदीय काण्ड ३, परि० १ ।। ३ दैवश्लोक ८ ।
४ दैवश्लोक १३ । ५ दवश्लोक १६८ । ६ वजयन्ती, पृष्ठ ३ ।

भवति 'भावयेज्ज्योतिरान्तरम्'[१] इत्यादावभूतप्रादुर्भावादिष्वप्यय भूभवति । तच्च 'कुर्द खुद गुर्द गुद क्रीडायामेव' इत्येवकाराद् 'यमो गन्धने' ( अष्टा० १।२।१५ ) इत्यादौ चोपरमादिभ्योऽर्थान्तराभिधानस्य बहुलमुपलम्भात्, 'अञ्चोऽनपादाने' ( अष्टा० ८।२।४८ ) इत्यत्र च 'अनेकार्था धातवो भवन्ति इति भाष्याद् 'धातुपाठे तु क्रियावाचित्वप्रदर्शनपरोऽर्थनिर्देश, न तु नियमार्थ, तथा च 'कुर्द खुर्द गुद गुद क्रीडायामेव' इत्येवकार पठित ' इति च कैयटोक्तिनिर्वाहादवसीयते । यथाप्रयोग क्वचिद् पठितेऽपि अर्थे धातवो भवन्तीति यावत् । अत्र च सत्ताया भवति, प्राप्तौ भावयते भवते, अवकल्कने भावयतीत्येव वाच्येऽन्यथावचन यथार्ह प्रक्रियादिभिर्बालानुग्रहार्थ छन्दोऽनुग्रहार्थं च । एवकारश्च पौनवचनिक । परस्मैपदाद्येव चात्र विवक्षित, न तु लडेकवचनाद्यपि । तथा च 'सूत्रे लिङ्गवचनाद्यप्रामाण्यमविवक्षात '[२] इति न्यायविद । 'ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यात्'[३] इत्यादिभिन्नलकारनिर्देशश्चैवमेव युज्यते । णिच्चेह चुरादिणिच् । तङ् च 'तङानावात्मनेपदम्' ( अष्टा० १।४।१०० ) इत्युक्तस्य भावयमान इत्याद्यानस्याप्युपलक्षणम् । एतच्च सर्वं बालाद्यनुग्रहादिक यथायोगमुत्तरेष्वप्युन्नेयम् । प्राप्ताविति । अत्र तावद् 'आधृषाद् वा' इति चुरादौ पठ्यते 'युज पृच सयवने' इत्याद्या 'धृष प्रसहने' इत्यन्ता धातवो विकल्पेन णिचमुत्पादयन्ति इत्यर्थ । 'भू प्राप्तावात्मनेपदी' इति युजादौ[४] । भू इत्यय धातु प्राप्तौ वा णिचमुत्पादयति, आत्मनेपदी चेत्यर्थ । अत्र च यद्यप्यात्मनेपदस्य णिच्सन्नियोगशिष्टत्वाण्णिजभावपक्षे 'सन्नियोगशिष्टानामेकतरापायेऽन्यतरस्याप्यपाय '[५] इति न्यायेन परस्मैपदमेव युक्तम्,

---

१ ध्यायेदित्यर्थ । अनुपलब्धमूलम् ।　　२ तुलना कार्या-सूत्र लिङ्गवचनमतन्त्रम् । परिभाषावृत्ति ३० ।　　३ दैवश्लोक ८ ।

४ युज पृच सयवने' इति प्रक्रम इत्यर्थ ।　　५ तुलना कार्या—सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपाय । न्यायसग्रह ( हेमहसगणि ) ३० । सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय । परिभाषावृत्ति ७५ ।

तथापि 'भवते' इत्यात्मनेपद वदन् एतन्मन्यते—यदाह **मैत्रेयरक्षित** — 'आकुस्मादात्मनेपदीति प्रकरणे भू प्राप्तौ वेति वक्तव्ये आत्मनेपदीति वचन केवलाण्णिजन्तादप्यात्मनेपद यथा स्याद्'[१] इति। तदयुक्तम्, यदि खल्वाकुस्मीये काण्डे 'भू प्राप्तौ वा' इत्युच्येत तदा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'[२] इति न्यायेनानन्तरप्रकृतस्यात्मनेपदित्वस्यैव विकल्प प्रतीयेत, न पुनर्महाप्रकृतस्य चुरादिणिच। तेनैतदात्मनेपदिग्रहण न सन्नियोगशिष्टन्यायापनयनाय प्रभवतीत्यणिचूपक्षे परस्मैपदमेव युक्तमुत्पश्याम। तथा च 'मनोरमा भा भवते'[३] इति प्रयोग प्रकृत्य भूवादि[४] सूत्रे **सुधाकर**—"भू प्राप्तावात्मनेपदी आधृषाद्वेति विकल्पितणिच्क इति केश्चित् समर्थितम्। तण्णिच्सन्नियोगेनात्मनेपदित्वादसाधीय। अत एव 'स राष्ट्रमभवत्'[५] इत्यादि प्रयुयुजे" इति। **धनपालशाकटायनौ** चाणिच्पक्षे परस्मैपदमेव प्रतिपेदाते। एव च 'शपि तत्रैव भवति' इति पठितु युक्तम्।

अन्यत्राप्येवमुन्नेतुमुचित पाठपाटवम्।
बली पुरुषकारो हि दैवमप्यतिवतते॥

'भुवोऽवकल्कने कृपेश्च' एतदर्थाद् भुव कृपेश्च स्वार्थे णिच् स्यादित्यर्थ। अत्र **क्षीरस्वामी**—अवकल्कन मिश्रीकरण भावयति क्षीरेण घृतम्'[६] इति। भुवोऽवकल्कने, **इत्यपरे** पठन्ति। तथा च **धनपाल**—'कृपेस्तादर्थ्ये' इति पठित्वा अवकल्पयति इत्युदाजहार। तादर्थ्य इति हि भुव इति पूर्वधातोर्योऽर्थस्तदर्थत्वे सतीत्यर्थ। **क्षीरस्वामी** तु 'कृपेर्योऽर्थस्तदर्थभावे इति व्याख्यायावकल्पयतीत्युदाहरण च 'समर्थो भवती'ति व्याचष्ट[७]। मूलशुद्धिस्त्वत्र कीदृशीति

---

१ धातुप्रदीप १०।२८५, पृष्ठ १४६, १४७। ' भू प्राप्ताविति वक्तव्य जन्ताच्चात्मनेपद इति पाठस्तत्र। २ परिभाषावृत्ति ५०।

३ अनुपलब्धमूलम्। ४ अष्टा १।३।१॥ ५ त० ब्रा० १।७।७॥

६ क्षीरतरङ्गिणी, पृष्ठ ३०२। 'भावयति दध्नौदनम्' इति तत्र पाठ॥

७ पुरुषकारोद्धृत क्षीरस्वामिपाठ क्षीरतरङ्गिण्या नोपलभ्यते। तत्र त्वेव पठ्यते 'तादर्थ्यमुद्द शविषयम्। अवकल्पयति देवताभ्यो हवि, सकल्पयति। धातुवृत्तौ

न विद्धः । तथा च 'दध धारणे' इत्यत्र स[1] एवाह—'कौशिकस्तु दद धारणे दध दान इति पाठ व्यत्यास्थत् । युक्तायुक्तत्वे तत्र सूरय प्रमाणम् । वय तु मतभेदप्रदशनमात्रेणैव कृतार्था मुनिप्रख्याना वाक्य कथकार विकल्पयाम । वयमपि हि स्खलन्तोऽयै कियन्नोपालप्स्यामहे'[2] इति । तदेवम्—

पाठा व्याख्याश्च धातूना दृश्यन्ते स्वरिणा क्वचित् ।
प्रयोग एव भगवास्तानवस्थापयेत् पथि ॥

सवथापि 'चुर स्तेये' इत्यत्र चुरादिण्यन्तेभ्यो 'णिचश्च' इत्यात्मनेपद नेच्छन्तीति **मैत्रेयरक्षितेनोक्त**,[3] तत्र तत्र च तेनैव व्यवहृतमाहृत्य भावयतीति परस्मैपदमात्रमुदाहृतम् । न त्वेतद् बहूनामनुमतम् । उक्त च तेनै[4]वापि—'धातुप रायणे त्वात्मनेपदमुदाहृतम्'[5] इति । तेनात्र चोत्तरत्र च चुरादिण्यन्तादप्यात्मनेपदमुदाहार्यम् । **शाकटायन** पुन पूवमेव पक्ष पयग्रहीत् ॥

एव 'भूवादयो धातव ( अष्टा० १।३ १ ) इति प्राथम्य मङ्गल चानुसृत्य भुव पुन पाठफल प्रथममुक्त्वात पर पाठक्रममुल्लङ्घ्य बुद्धिलाघवाद् यथासम्भव मातृकाक्रममाश्रित्याह—

**दाञो दत्ते ददातीति दाणो यच्छति दो द्यति ।**
**दाति दायति दाब्दैपोदयते रक्षणे डित ॥ ४ ॥**

'डुदाञ दाने' जुहोत्यादि । यद्यपि च 'दत्ते' इत्यादि निर्देशादेव धातूना तत्तद्गणेषु पाठ प्रायेण व्यक्त, तथापि तत्रतत्रवविध व्याख्यान यथासम्भव बालार्थ पाठशुद्धचर्थ च । दाण् दाने' भूवादि । एवमुत्तरेषु अविशेषोक्तौ भूवादित्व द्रष्टव्यम् । 'पाघ्रा' ( अष्टा० ७।३।७८ ) इत्यादिना यच्छादेश । प्रपूर्वश्चाय प्राचुर्येण प्रयुज्यते ।

---

( पृष्ठ ३६२ ) सायण प्रौढमनोरमाया ( पृष्ठ ६१६ ) च दीक्षितोऽ यथा प्राठमुद्धरत । द्र० क्षीरत० पृष्ठ ३०२, टि० ५ ।

१ स क्षीरस्वामीत्यथ । २ क्षीरतरङ्गिणी पृष्ठ १४, स्वल्प पाठभेद ।

३ धातुप्रदीप १०।१, पृष्ठ १३० पाठभेदेन । ४ मत्रेयरक्षितेनैवत्यथ ।

५ धातुप्रदीप १०।१, पृष्ठ १३० ।

क्वचित् पुनरन्यथापि । 'यच्छति प्रियतमे रभसेन'[1] 'शर्म यच्छत द्विपदे चतुष्पदे'[2] इति । एवमुत्तरेष्वप्यव द्यतीत्यादौ बहुलमुपसृष्टता द्रष्टव्या दो अवखण्डने' दिवादि । 'ओत श्यनि' ( अष्टा० ७।३।७१ ) इत्योकारलोप । 'नुमादिनाऽयभावेऽपि सादृश्यात् केऽप्यवक्षत'[3] इति वक्ष्यमाणन्यायेनात्र पुन पठता मन्यते । दाप् लवने' अदादि , 'दैप् शोधने,' अवपूर्वश्चाय प्रयुज्यते । तथा च 'दाधा घ्वदाप्' ( अष्टा० १।१।२० ) इत्यत्र **भाष्यम्**—'अवदायति अवदात मुखम्' इति । 'देङ् रक्षणे'

**"दाने दत्तो ददातीति दाञो दाणस्तु यच्छति ।**
**लवने दाति दापस्तु दो द्यतीत्यवखण्डने ॥**
**रक्षणे दयते देङो दायेद् दैपस्तु शोधने ॥"**

इति पाठेऽपि न फलभेद । अत एववविधा पाठभेदा पाठाऽभेदेऽपि वा पौर्वापर्यभेदा नैवाभिधायिष्यन्ते ।

**गाते गाङो गतावर्थे कै गै शब्देऽस्य गायति ।**
'गाङ् गतौ', त्रिष्वपि वचनेषु समानरूपम् ॥

**पाने पिबति रक्षाया पाति पायति शोषणे ॥ ५ ॥**
'पा पाने', 'पा रक्षणे' अदादि , पै ओवै शोषणे' ॥

**धेटो धयति पानार्थे धाञो धत्तो दधात्यपि ।**

'धेट् पाने', 'डुदाञ् दानधारणयो'[4] जुहोत्यादि , तथा च 'डुदाञ् दाने, डुधाञ् धारणे च' इति **शाकटायन** । 'डुधाञ् धारणपोषणयो , दानेऽप्येके' इति तु **मैत्रेयरक्षित** ॥

**द्रै स्वप्ने द्रायति द्राति कुत्सिते गमने लुकि ॥ ६ ॥**

---

१ श्लोकांशोऽय पाठभेदेनोपलभ्यते । यथा—'यच्छति प्रतिमुख दयितायै इति ( किरात ९।१४ ), 'चुम्बति प्रियतमे रभसेन' इति ( किरात ९।४७ ) ।

२ ऋ० १०।३७। ११ ॥          ३ दैवश्लोक ६६ ।

४ एतत्पाठविषये क्षीरतरङ्गिण्या १९३ तमे पृष्ठेऽस्मदीया टिप्पणी द्रष्टव्या ।

'द्रा कुत्सायां गतौ', लुकि शब्लुकि ॥

**शब्दसंघातयोर्धात्वोस्स्त्यायत्येकस्य सो न षः ।**

'स्त्यै ष्ट्यै शब्दसंघातयोः', 'स्त्यै संघाते, ष्ट्यै शब्दे' इत्यनुक्तं यथासंख्यं नेष्यते । एवमन्यत्राप्येवंविधे धातुपाठे द्रष्टव्यम् । तथा च 'ऋदितो मेदते मेदेद् मेधाहिंसनयोर्द्वयोः,[1] इति 'प्रत्येकं निदिनेद्योस्ता नेदते नेदतीत्युभे । कुत्सायां सन्निकर्षे वा,[2] इति च वक्ष्यते । तत्र च शब्दे संघाते वा यौ धातू, तयोः स्त्यायतीति रूपम् इति । एवं तर्हि किमर्थं द्वौ पठितौ इत्यत उक्तम्—**एकस्य सो न षः** इति । तयोरेकस्य 'स्त्यै' इत्यस्य तिस्त्यासति अतिस्त्यपत् इत्यादिषु सश्चङन्तेषु 'आदेशप्रत्यययोः (अष्टा० ८।३।५९) इति सस्य षत्वं न भवति, अषोपदेशत्वेनानादेशसकारत्वात् । अन्यस्य तु तिष्ट्यासति अतिष्ट्यपत् इत्यादि भवत्येवेत्यर्थः । यथादैवमेव च **मैत्रेयरक्षितः**[3] । **क्षीरस्वाम्यादयः** पुनः **शाकटायनश्च** द्वितीयस्य ष्ट्यायतीत्येवरूपं प्रतिपेदिरे[4] । तद् भाष्योक्तेन षोपदेशलक्षणेन विरुध्यते । तथाहि—धात्वादेः षः सः' (अष्टा० ६।१।६४) इत्यत्र **भाष्यम्**—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्स्वदिस्विदिस्वञ्जिस्वपयश्च । सृपिसृजिसृस्तृस्तृ-स्त्यासेकृवर्जम्' इति । अच्परो दन्त्यपरो वा सकारः प्रयोगे आदिर्येषां सृप्यादिभ्यः सप्तभ्योऽन्येषां धातूनां ते च, स्म्यादयश्च पञ्च पाठे षादयो वेदितव्या इत्यर्थः । 'ष्वञ्ज परिष्वङ्गे', 'ञिष्वप् शये', 'गम्लृ सृप्लृ गतौ', शेषास्त्विकारान्तादिष्वेव वक्ष्यन्ते । तत्र च 'स्तृ' इति ह्रस्वान्तं **केचित्** न पठन्ति । तथा च 'स्तॄञ् छादने' इति दीर्घान्तमेव **जिनेन्द्रादयः** प्रायः पठन्ति । **श्रीधरस्तु** 'स्तॄञ् छादने दीर्घः' स्तृञ् छादने ह्रस्वः' इत्युभावप्युपन्यास्थत् । **स्त्येति** चात्र स्त्यै गृह्यते । **भागवृत्तौ** तु 'सीकृ[5]सेकृ' इत्यधिकमपि पठ्यते । तच्च 'सीकृ सेचने'

---

1 दैवश्लोक १०४ । 2 दैवश्लोक ११४ । 3 द्र० धातुप्रदीप, पृष्ठ ६६ । 4 द्र० क्षीरतरङ्गिणी, पृष्ठ १३३ ।

5 कृष्णलीलाशुकेन षोपदेशलक्षणे भागवृत्त्युक्तः 'सीकृ'पाठः 'मषणे शीकयेत' (दैवश्लोक ४२) इति कारिकाव्याख्याने निराकरिष्यते ।

इति **श्रीधरो** व्याकरोत्, 'एतान् अष्टौ वर्जयित्वा' इति चाधिक्यमेव मुक्तकण्ठमुक्तवान् । तच्चैतल्लक्षण ष्ट्यायतीत्येव प्रयोगाभ्युपगमे सादित्वदन्त्यपरत्वयोरभावात् ष्ट्यायति न व्याप्नुयात् । व्यापकेन च नाम लक्षणेन भवितव्यम् ॥

**सै क्षये सायनीतीष्टमन्तकमणि तु स्यति ॥ ७ ॥**

'क्षै षै जै क्षये' । 'सै' इति तु पाठ षोपदेशलक्षणविरुद्ध । एतेनैतदपि प्रत्युक्तम्—यदुक्त 'क्रियार्थो धातु'[१] इत्यत्र **शाकटायनेन** 'षच समवाये । सचति सिषाचयिषति । केषाञ्चिदयमषादि पाठे, तेषा सिसाचयिषति । सृपिसृजिसृस्तृस्तृत्यासेकृवर्जम्' इति च यत् **केषाञ्चित्**[२] तदुपलक्षणम् । अन्यथा सचति सायत्यादयोऽपि षादय स्यु'[३] इति । प्रबलविरोधे हि बाधैव दुर्बलस्य न्याय्या । न पुनरुपलक्षणादिभिरुपरोधगन्धोऽपि । तथा च **पारमर्ष सूत्रम्**— विरोधे त्वनपेक्ष्य स्यादसति ह्यनुमानम्'[४] इति । एव च श्लोकेऽपि[५] षै' इत्येव पठितु युक्तम् । 'षो अन्तकमणि' दिवादि । तच्चावसनक्रिया ॥

**जानातीति श्नि सिध्येज्ज्ञापयति तु पुनर्मरणादौ घटादेश्-**
**चौ[६] मित्त्वेऽपीदमेव ज्ञप मिदिति पद ज्ञापने मारणादौ ।**
**तेनार्थाज्ज्ञापनेऽर्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्याद्**
**उक्तस्योक्तिर्णिचश्चेत्युदितविहतये ज्ञापयेज्ज्ञा नियोगे । ८॥**

'ज्ञा अवबोधने इत्यस्य श्नाविकरणे सति जानातीति सिद्धचेत् । ज्ञाजनोर्जा' ( अष्टा० ७।३।७९ ) इति जादेश । ज्ञारूपोदाहर-

---

१ जन शाकटायन १।१।२२॥   २ पाठोऽय महाभाष्ये ( ६।१।६४ ) क्वचिदुपलभ्यते ।   ३ पाठोऽय यथा पुरुषकारेण निर्दिष्टस्तथा 'क्रियार्थो धातु' ( १।१।२२ ) सूत्रस्यामोघाया वृत्तौ नोपलभ्यते । कदाचित् 'आदेष्ण ( ४।२।२६१ ) इत्यादिसूत्रवृत्तौ स्यात् । [ अमोघावृत्तिर्भारतीयज्ञानपीठकाश्या मुद्रचमाणा वतत ]   ४ मीमासा १।३।३॥   ५ दैवश्लोके ( ७ ) ऽपीत्यथ ।   ६ 'चुरादिश्चु' ( दवश्लोक ११८ ) इति परिभाषया चुरादावित्यर्थ ।

णमात्र चैतत् । प्रयोगे तु 'अकर्मकाच्च' ( अष्टा० १ ३।४५ ) इत्यात्मनेपद मा भूदिति कृष्णमित्यादिकर्मोपस्कर्तव्यम् । अकत्रभिप्रायविषय च द्रष्टव्यम् अ यथा 'अनुपसर्गाज्ज्ञ' ( अष्टा० १।३।७६ ) इत्यात्मनेपदप्रसङ्गात् । घटादे पुनरस्य मारणाद्यर्थत्वे ज्ञपयतीति तु सिध्येत् । पादपूरणार्थो वा तु । अत्र 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिषु पठ्यते । इत्थमेव च 'श्लाघह्नुङ्स्था' ( अष्टा० १।४।३४ ) इत्यत्र न्यास । 'निशानेष्विति पाठ' इति हरदत्त[1]। चन्द्रगोमी चैवमेवापाठीत् क्षीरस्वामिशाकटायनकौमारास्तु आद्यमपि पाठ पक्षान्तरत्वेन पर्यग्रहीषु[2] तत्र निशामनमालोचन चाक्षुषज्ञानम् । शाकटायनस्तु 'आलोचन प्रणिधानमाहु' इत्याह । निशान तीक्ष्णीकरणम् । तत्र मारणादिष्वर्थेषु ज्ञा मित्सज्ञो भवतीत्यथ इति मित्त्वाण्णौ 'मिता ह्रस्व' ( अष्टा० ६।४।९२ ) इति ह्रस्व । तेषु तु मारणे 'सज्ञपयति' इति प्रयुञ्जते । शेषयोरपि कौमारानुसारेण विपूव प्रपूर्वश्च प्रयोगो द्रष्टव्य । विष्णु विज्ञपयति, प्रज्ञपयति रूप कोप वेति । अथ ज्ञपिप्रसङ्गादनादन्तस्यापि ज्ञपे फलमुक्तम्—'ज्ञप मिच्च' इति चुरादिमित्त्वेऽपि **इदमेव पदम्**, तच्च ज्ञापने मारणादौ च प्रयुज्यत इति । **केचित्** पुन 'ज्ञप मारणतोषणनिशामनेषु मिच्च' इति वा मारणतोषणनिशामनेषु ज्ञा मिच्च' इति वा पठन्ति । व्यक्त चैतत् 'इको झल्' ( अष्टा० १।२।९ ) इत्यत्र न्यासे । अनयोस्त्वाद्यमेव पक्ष **क्षीरस्वामी** समाशिश्रियत्,[3] निशानेष्विति तु विशेष । **शाकटायन** पुनरन्त्यपक्षानुकूल । तत्र च पक्षद्वयेऽपि निशानपाठोऽपि घटादिपाठसाम्याच्छाकटायनानुकूल्याच्च द्रष्टव्य । **क्षीरस्वामिपक्षे** पुनर्निशामनपाठोऽपि । 'ज्ञप मिच्च' इत्येव तु **मैत्रेयरक्षित**[4]। 'श्ला-

---

१ पदमञ्जरी १।४।३४। पदमञ्जर्यां मुद्रिते पाठे तु निशामनेषु' इत्येवोपलभ्यते । द्र० भाग १, पृष्ठ २९३ । २ द्र० क्षीरतङ्गिणी १।५४८, पृष्ठ १११ । शाकटायनकौमारयोस्तु धातुव्याख्यानग्रन्थौ नाद्य याव मुद्रितौ ।

३ द्र० क्षीरतरङ्गिणी १०।७५, पृष्ठ २८७ ।

४ द्र० धातुप्रदीप १०।८६, पृष्ठ १३५ ।

घट्नुड्स्था' (अष्टा० १।४।३४) इत्यत्र **न्यासकारश्च** 'सर्वथाऽपि प्रच्छ ज्ञी'साया 'श्लाघह्नुङ्स्थाशपा ज्ञीप्स्यमान' ( अष्टा० १।४।३४ ) इति ज्ञाने ज्ञापनेऽपि च प्रयोगदर्शनान्मारणाद्यर्थानामुपलक्षणत्वादय ज्ञपिर्यथादृष्टमर्थान्तरेऽपि भवति' इति । एव च 'ज्ञप मिच्च' इत्येव पाठो युक्ततम । येनैव मारणादौ ज्ञापने चार्थे ज्ञपयतीति सिद्धम्, तेनार्थाद् ज्ञापनेऽर्थे द्वैरूप्य भवति । यथा हि चुरादौ ज्ञप मिच्च' इति ज्ञापनेऽपि मित्त्वविधानाश्रयणाद् ह्रस्वो भवति, तथा घटादौ मारणादिविशेषणबलात् ततोऽन्यत्र मित्त्वाभावाद् ह्रस्वो न भवतीत्यर्थाज्ज्ञापने द्वैरूप्यम् । अथ घटादौ मारणादिषूक्तस्य मित्त्वस्य चुरादावपि तेष्वेवोक्ति किमर्थेत्यत उक्तम्—**उक्तस्योक्तिर्णिचश्चेत्युदितस्यात्मनेपदस्य** विघातार्था बाधनार्थेति । अर्थाच्च चुरादिणिचोऽन्यत्र विघात ब्रुवता ज्ञपयत इत्यपि तत्र स्यादित्युक्त भवति । अय च विभागश्चुरादिण्यन्तेभ्यो 'णिचश्च' ( अष्टा० १।३।७४ ) इत्यात्मनेपदाभावपक्षमाश्रित्योक्त । पक्षान्तरे तु मारणादिष्वन्यत सिद्धत्वात् ततोऽन्यत्रैवानेन विधिर्युक्त । 'ज्ञा नियोगने' आज्ञापयेत् ॥

**मिमीते मायते माने माति तत्रैव शब्लुकि ।**
**मयते प्रणिदानेऽर्थे**

'माङ् माने शब्दे च' जुहोत्यादि । 'माङ् मानशब्दयो'रित्यनुक्तिरन्वाचयद्वारा शब्दे प्रयोगाप्राचुर्यार्था नूनम् । यदाह 'गाधृ प्रतिष्ठालिप्सयोग्रन्थे च' इत्यत्र **क्षीरस्वामी—**अस्य[1] पृथक् पाठो विरलप्रयोगार्थ'[2] इति । व्यभिचरति चैतत् 'पूयी विशरणे दुर्गन्धे च' इत्यादौ[3] । 'भृञामिद्' ( अष्टा० ७।४।७६ ) इत्यभ्यासस्येत्वम् ।

१ अस्य ग्रन्थार्थस्येत्यथ । अत्रेति पाठान्तरम्, तच्च क्षीरतरङ्गिणीपाठाननुगुणम् ।

२ क्षीरतरङ्गिणी १।५, पृष्ठ १२ ।

३ पूयी धातो दुर्गन्धे प्रयोगप्राचुर्यादिति शेष । वय तु पृथग्विभक्तिनिर्देशादनुमिनुमो यत् कदाचिदत्र 'गाधृ प्रतिष्ठालिप्सयो, पूयी विशरणे इत्येव मूलपाठ आसीत् 'ग्रन्थे च, दुर्गन्धे च' इत्यशौ पश्चात्तनैरुभयत्र वर्धितौ । यथा क्वचित् धातुपाठकोशेषु 'डुवप बीजसन्ताने' इत्यस्य स्थाने 'डुवप बीजसन्ताने छेदने च' इत्येव

'माङ् माने' दिवादि । अयं च मैत्रेयरक्षितेनानुमत, न तु बहुभि । तथा च 'घुमास्थागापाजहातिसा हलि' ( अष्टा० ६।४।६६ ) इत्यत्र न्यास – मा इति कस्येद ग्रहणम् ? किं मेङ् प्रणिदान इति भौवादिकस्य, उत माङ् माने इति जौहोत्यादिकस्य, आहोस्विद् मा माने इत्यादादिकस्य । गामादाग्रहणेष्वविशेष[1] इति त्रयाणामपि ग्रहणम्' इति । क्षीरस्वामी तु दिवादावेवाह—'माङ् माने इति दुर्ग'[2] इति । 'मा माने,' आधेयस्याधारादनधिकपरिमाणताऽत्र[3] मानम् । तेनाकर्मकोऽयम् । मान्ति तण्डुला स्थाल्यामिति । 'मेङ् प्रणिदाने' तच्च विनियम । अपमयते विनिमयते इत्यादि सोपसर्गस्यैवास्य प्रयोगो दृश्यते ॥

## श्राति श्रायति लुक्शपो ॥ ६ ॥

'श्रा पाके', 'श्रै पाके' । स च द्विविध । अन्यकर्तृक पच्यमानकर्तृकश्च । यथा–चैत्र पचति, पच्यते ओदन स्वयमेवेति । पचतीत्यस्याग्न्यादिभिस्तण्डुलान् विक्लेदयतीत्यर्थं । पच्यत इत्यस्य विक्लिद्यतीति । तत्र चान्त्य[4] क्वाथ इत्येके । श्रायति यवागू, क्वथतीत्यर्थ । अथ घटादौ च 'श्रा पाके' इति पठ्यते, चुरादौ च कैश्चित् । यदुक्त 'श्रृत पाके (६।१।२७) इत्यत्र न्यासे–'श्रा पाक इत्यदादौ च पठ्यते, घटादिषु च मित्संज्ञार्थं, कैश्चिच्चुरादावपि, श्रै पाके इति भूवादौ पठ्यते' इति । तथा च चन्द्रगोमिना चुरादावपि श्रा पाके इति पठ्यते । तत्र च घटादौ श्रा पाके इत्यस्यार्थे[5] वृत्तिकृतो विवदन्ते । तत्र तावच्छ्रातिश्रायत्यो सामान्यानुकरणमिति मैत्रेयरक्षितक्षीरस्वामिशाकटायना,

---

परिवर्धित पाठ उपलभ्यते । अत्र 'वपि प्रकिरणे दृष्ट, छेदन चापि दृश्यते' इति महाभाष्यम् ( १।३।१ ) अप्यनुशीलनीयम् । यद्वा एतादृशा पाठा पौर्वकालिकश्लोकधातुपाठानुरोधेन स्यु । एतद्विषयेऽस्माकीन 'स० व्याकरण-शास्त्र का इतिहास' ( भाग २, पृष्ठ ६४—६७ ) नामा ग्रन्थो द्रष्टव्य ।

१ परिभाषावृत्ति १०८ । २ क्षीरतरङ्गिणी १।३२ व्याख्याने, पृष्ठ २०३ ।

३ अदादिपाठ इत्यर्थ । ४ अन्त्य 'श्रै पाके' इत्यत्र निर्दिष्ट पाक ।

५ अर्थे इत्यव्यय तादर्थ्ये, घटादिपठितश्राधातुविषय इत्यर्थ ।

श्रातेरनुकरणमिति **हरियोगी**। सर्वथाऽपि पाकेऽर्थे श्रा मिद् भवतीत्यर्थं । श्रपयति, श्रपयते । पाकादन्यत्र श्रापयति घर्मं स्वेदयतीत्यर्थं । चुरादौ चैतदेवरूप 'नान्ये मितोऽहेतौ' इति मित्त्वनिषेधात् । येषा चुरादौ मित्त्वमुक्त ज्ञययति यमयति चहयति चपयतीति, तेभ्योऽन्ये धातवो हेतुमण्णिचोऽन्यत्र णौ मितो न भवन्तीत्यर्थः । तदेव चतुर्षु श्रा पाकेषु[1] सत्स्वपि द्वयोरेव फलवचन घटादेर्ज्ञपयतिवदुह्यत्वा-च्चुरादेश्च **मैत्रेयरक्षितादिवृत्तिष्वदर्शनाद्** । 'उक्ता न दुष्यन्त्यन्य-सम्भवे'[2] इति वक्ष्यमाणनीत्या निर्वाह सर्वत्राप्यूह्य ॥

**गतिगन्धनयोर्वाति वायतीति तु शोषणे ।**
**वयते वयतीत्येव तन्तुसन्तान इष्यते ॥ १० ॥**

'वा गतिगन्धनयो ' अदादि । गन्धन मदन हिंसा । तथा कथादौ **क्षीरस्वामी**—'वा गतिसुखसेवनयो , वापयति । वातेत्येके, वातयति अववातत्'[3] इति । **हेमचन्द्रस्तु** 'वातण्' इति पठित्वा 'सुखसेवन-योरित्येके' इति चोक्त्वा 'वेत्येके' इत्यप्याह । णि व चुरादित्व-चिह्नम्[4] । 'पै ओवै शोषणे', 'वेञ् तन्तुसन्ताने' ॥

**गतौ त्यागे यथासंख्य जिहीते च जहाति च ।**

'ओहाङ् गतौ', । 'भृञामित्' ( अष्टा० ७।४।७६ ) इतीत् । 'ओहाक् त्यागे' जुहोत्यादि ॥

**रै शब्दे रायतीतीष्ट रादाने राति शब्लुकि ॥ ११ ॥**

'रा ला आदाने' इति **चन्द्र** । तन्मतेनात्राप्याङ्प्रश्लेषो द्रष्टव्य[5] ॥

---

१ 'श्रांपाके' इति समुदायानुकरणात् सुप् । २ दैवश्लोक २०० ।
३ क्षीरतरङ्गिणी ०।२६८, पृष्ठ ३१५ । ४ हेमचन्द्राचार्यस्येति शेष ।
५ पाणिनीये धातुपाठेऽपीत्यर्थ । वस्तुत 'रादाने' इति सहितापाठे 'दाने-आदाने' चौभावप्यर्थौ ज्ञेयौ । 'अपघ्नतोऽराव्ण' ( ऋ० ९। ६३। ५ ) इत्यत्रा राव्णोऽदानशीलस्येत्यर्थ । मत्वर्थको रप्रत्यय आदानार्थकराधातोड-प्रत्ययेन, निष्पन्न स्वतन्त्रः शब्द । यथा तैलगोष्ठकटदघ्नमात्रादितद्धित-

**स्नातीति शौचे स्न स्नापयेदिति चेच्छन्ति केचन ।**

इति च क्वचित् कोशे दृश्यते[१] । 'ष्णा शौचे' अदादि । 'ष्णै शौचे' । तथा च–

पाञ्चाल्या पद्मपत्राक्ष्या स्नायन्त्या जघन घनम् ।
या स्त्रियो दृष्टवत्यस्ता पुम्भाव मनसा ययु ॥[२]

इति भगवान् **व्यास** । 'स्नाति स्नायत्याप्लवते' इति **चाख्यात-निघण्टु** । 'उष्णीष स्नायते'[३] इति **निरुक्त** चैव व्याचख्यु – उष्णीष शिरोवेष्टनम् । स्नायते शौचार्थस्य वेष्टनार्थस्य वोभयस्यापि तत्र सम्भवाद्'[४] इति । एव च 'ष्णै वेष्टने' इत्यस्यापि स्नायेदिति द्रष्टव्यम् । क्षीरस्वाम्यादीना च बहूनामनुमतोऽय पाठ । **देवेन** तु 'ष्टै **वेष्टने** स्तायति तिष्टापयिषति' इति **मैत्रेयरक्षितो**क्ततकारविस्रम्भा-न्नायमनुसृत ।

**क्षये क्षयति हिसाया क्षिणातीति षितो भवेत् ॥ १२ ॥**
**निवासगत्यो क्षियति क्षिणोत्यावगुणे क्षिणो ।**
**[ एके क्षेरेव भाषाया क्षिणोतीति पद विदु । ]**

अत्रान्त्यमर्ध क्वचिदेव दृश्यते । 'क्षि क्षिये' 'क्षिरैश्वर्ये इत्येके' **इत्येव क्षीरस्वामी**,[५] 'ऋभून् क्षयति ईष्टे ऋभुक्षन्द्र'[६] इति च । 'क्षिष् हिसायां' क्र्यादि । षिद्ग्रहणमस्यैव पाठस्योपलक्षणार्थ,

---

प्रत्यया पक्षान्तरे स्वतन्त्रशब्दत्वेन स्वीक्रीयन्ते शाब्दिक । एव च ऊषर-नगरपांसुरमधुर इत्येवमादय कृदन्ता एव शब्दा ज्ञेया । निरुक्तेऽप्सरानिर्वचन ( ५।१३ ) क्षीरतरङ्गिण्या ३१ तमे पृष्ठे तृतीया टिप्पणी चापि द्रष्टव्या ।

१ वक्ष्यमाणप्रयोगदर्शनात् क्वाचित्कमपि पाठमादरयति व्याख्याकार । अन्यथाऽऽदराभाव सूचयितु समनन्तरश्लोकव्याख्यायामिवेहाऽपि 'क्वचिदेव' इतिनिषधार्थ-प्रधानमेवकार निर्दिशेत् । २ अनुपलब्धमूलम् । ३ निरुक्त ७।१२॥

४ स्कन्दस्वामिविरचिते निरुक्तव्याख्याने ( ७।१२ ) व्याख्यानमिदमुपलभ्यते ।

५ क्षीरतरङ्गिणी १।६७७, पृष्ठ १४५ । ६ क्षीरतरङ्गिण्याम् 'ऋभु क्षयति इष्टे ऋभुक्षा' इत्येव पाठ उपलभ्यते ( पृष्ठ १४५ ) ।

रि क्षि इति वक्ष्यमाणक्षिव्यावृत्यर्थं च । 'षिद् भिदादिभ्योऽङ्' । ( अष्टा० ३।३।१०४ ) इत्यङि कृते क्षियेत्येवरूपफलसूचनार्थं च । दीर्घान्तोऽयमित्येके । क्षीणाति इति हेमचन्द्र । 'क्षि निवासगत्यो' तुदादि । औ उविकरणे अगुणे सज्ञापूर्वको विधिरनित्य '[1] इति गुणाभावे च सति 'क्षणु हिसाया क्षिणु च' इति मैत्रेयरक्षिताद्युक्तस्य[2] धातो क्षिणोतीति भवति । अस्य च नुमादिनाऽन्यभावेऽपि क्षिसादृश्यादत्रोक्ति । स्वरितेत्त्वाच्च 'क्षिणुते' इत्यात्मनेपदस्याप्युपलक्षणमेतत् । हरियोगी तु अत्र सज्ञापूवको विधिरनित्य '[3] इत्येतद् अनादृत्य क्षेणोतीत्युदाहार्षीत् । तथैव च चान्द्रेण पूर्णचन्द्रेण ऋणु गतौ, तृणु अदने, घृणु दीप्तौ इत्यत्र अर्णोति तर्णोति घर्णोतीत्युदाहृत्योक्त –'धातोर्लघोरुपा॰ यस्यादेड् नेष्यत इत्यन्य । तस्याभिप्रायो मृग्य ' इति । क्षीरस्वामी पुन क्षणुमेव पठित्वा 'क्षिणु इति दुर्ग , क्षिणोति' इत्याह[4] ऋणोतीत्यादि चोदाहृत्य 'एते सावधातुके सन्दिग्धगुणा , अर्णोति' इत्याद्याह[5] । क्षेरेव तु श्नौ सति भाषायामपि क्षिणोतीति भवतीत्येके । तथा च मैत्रेरक्षित स्वादिगणे तृप प्रीणने इत्यस्यानन्तर पठ्यमान 'छन्दसि' इत्येतद् व्याचक्षाण 'छन्दसीत्यागणपरिसमाप्तेरधिक्रियते' इति क्षीरस्वामी[6]वदुक्त्वाह–'रि क्षि चिरि जिरि दाशृ दृ हिसायाम् । क्षिणोति । भाषायामप्यस्य प्रयोग केचिदिच्छन्ति । पञ्चबाण क्षिणोति'[7] इति । क्षीरस्वामी तु ऋक्षि इति पठित्वा ऋङ्क्ष्णोतीति आनृङ्क्ष इति चोदाहृत्य 'ऋणोति क्षिणोति इत्येके'[8] इत्याह ॥

**जयेज्जयाभिभवयोराद्येऽर्थेऽ सावकर्मक ॥ १३ ॥**

---

१ परिभाषावृत्ति ७४ ।   २ द्र० धातुप्रदीप ८।३,४ पृष्ठ ११९,१२० ।

३ परिभाषावृत्ति ७४ ।   ४ क्षीरतरङ्गिणी ८।३, पष्ठ २६२ ।

५ क्षीरतरङ्गिणी ८।७ सूत्रव्याख्याने, पृष्ठ २६२ ।

६ तुलनीयम्—क्षीरतरङ्गिणी ५।२९ सूत्रव्याख्यानम् ।

७ धातुप्रदीप पृष्ठ १०४ । 'पञ्चबाणः क्षिणोति' मेघदूतवाक्यमिति तत्सम्पादकः ।

८ क्षीरतरङ्गिणी ५।३३, पृष्ठ २३१ ।

**उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मक ।**

'जि जये', जयेत् कृष्ण । सर्वोत्कर्षेण वर्ततेत्यथ । 'जि अभिभवे' जयेत् कसम् । जि ज्रि अभिभवे' इति **क्षीरस्वामी**[१] 'अभिषव इत्यपरे' इति च **पूर्णचन्द्र** । तत्र च ज्रि इति पाठो ज्रयतीति ताभ्या[२]मुदाहृतोऽपि 'जिगादुप ज्रयति गौरपीच्यम्'[३] इत्यादिदर्शना-दार्ष । सवथाप्यथभेदाद् द्विष्पाठ इति तात्पर्यार्थ । एव च 'ज्रि अभिभवे' 'जि जये च' इति सकृदेव पाठश्चिन्त्य इत्यप्यर्थादायातम् । सकर्मकाकमकोक्त्या तु प्रयोगभेदश्चास्तीत्युक्तम् । नन्वेमपि 'जि जये' इत्येव द्वावप्यर्थौ सिद्धौ जयत्वाविशेषादित्यत–उक्तम् **उत्कर्षप्राप्ति-रिति** । न जय इति जयमात्र गृह्यते द्विष्पाठबलाद् गोबलीवदनीत्या जयविशेषस्यैव ग्रहणात् । द्विष्पाठस्त्वर्थप्रयोगभेदौ व्यङ्क्तुमित्य भिसन्धि ॥

**अयत्येतीयते गत्यामधीतेऽध्येति चेङिको ॥ १४ ॥**

'इ गतौ', 'ई' इत्येके । अनयोश्च पाठयोरियाय अयाञ्चकारेति फलभेद । तयोश्चाद्ये 'अभ्यासस्यासवर्णे' ( अष्टा० ६।४।७८ ) इतीयडादेश । अन्त्ये तु 'इजादेश्च गुरुमतोऽनृच्छ' (अष्टा० ३।१।३६) इत्याम । तत्र चैकत्वेऽप्यादिवद्भावव्यपदेशिवद्भावाभ्यामिजादित्व-गुरुमत्त्वे । व्यक्तौ चैतो पक्षौ **मैत्रयरक्षितवृत्तौ**[४] । अपरे पुनरुभावपि न पठन्ति । व्यक्त चैतद् **धनपालशाकटायनवृत्त्यो** । अपि च शौट्ट गर्वे' इत्यादिकान् कांश्चन धातून् पठित्वाऽन्ते च 'उदात्ता'[५] इत्युच्यते ।

---

१ क्षीरतरङ्गिणी १।६७६, पृष्ठ १४४ । तत्र 'ज्रि' स्थाने 'ज' पठ्यते । 'जरति' इति चोदाहृत्य दुर्गमतेन 'ज्रि' पाठो निर्दिश्यते । २ अत्र कदाचित् पुरुष-कारग्रन्थस्य पाठो भ्रष्ट इति प्रतीयते । 'ज्रयति' उदाहरणे वक्ष्यमाण 'जिगादुप-ज्रयति' इति मन्त्रप्रयोग कथमपि न विरुध्यते । ग्रन्थकारश्च उक्तमन्त्रप्रयोगात् क्षीरस्वामिपूर्णचन्द्रपाठयोरनार्षता वदति । तेन प्रतीयते कदाचित् 'जि जृ अभिभवे । तत्र ज इति पाठो जरतीति ताभ्यामुदाहृतोऽपि ' शुद्ध पाठ स्यात् । तथासति क्षीरतरङ्गिणीपाठोऽप्यनुसृतो भवति ।

३ ऋ० ६।७६।५॥ ४ धातुप्रदीप, पृष्ठ २६ । ५ द्र० क्षीरतरङ्गिणी १।२५४ धातुसूत्रम् ।

तच्चास्मिन् प्रकरणेऽयतेरपि पाठे सति तस्य 'अनिटस्वरान्तो भवतीति दृश्यताम्'[१] इत्यनुदात्तत्वात् प्राचुर्याभिप्रायेण कथचिन्नेय स्यात्, यथा वा मैत्रेयरक्षित —'उदात्तत्वमयतिवर्जम्, भट्टग्रामन्यायेन तूदात्ता इत्युच्यते'[२] इति । स चाय न्याय सुनिश्चित एवायते पाठे शोभेत, विप्रतिपन्ने पुनरुदात्तोक्त्याज्ञस्यवशादपाठपक्ष एव साधीयान् । 'उदयति'[३] इत्यादि चैवमसाध्वेवास्तु । क्षीरस्वामी पुन 'इट किट कटी गतौ' इति पठित्वा[४] ईदित्त्वात् 'कट्ट कट्टवान्', अन्ये इदितमेनम् ई च प्रश्लिष्टमाहु , इति चोक्त्वा[५] 'कण्टति, कण्टाफल मानुष-कण्टक , 'उदयति दिननाथे याति शीताशुरस्तम्' इति चोदाहृत्य[६] दिक्कालादप्ययगतौ[७] इति पठित्वैतदेवोदाहरन्[८] साध्वेव मन्यते । 'इण् गतौ' अदादि , 'ईङ् गतौ' दिवादि , 'इङ् अध्ययने', 'इक् स्मरणे' अदादी । 'इङिकावध्युपसर्गं न व्यभिचरत '[९] इत्याहु 'तदधीते तद्वेद' ( अष्टा० ४ २।५९ ) अधीगर्थदयेशा कमणि' ( अष्टा० २। ३।५२ ) इति निर्देशश्चैवमेव युज्यते ॥

## सिनोति सिनुते बन्धे सिनीते च सिनाति च ।

---

१ अनिटकारिका १ । २ द्र० धातुप्रदीप, पृष्ठ ३२। 'तूदात्ता इति सामान्योक्ति ' इति धातुप्रदीपे पाठ । ३ क्षीरस्वामिना 'उदयति' प्रयोगनिदशनाय उदयति दिननाथो याति शीताशुरस्तम्' इति 'उदयति वितोध्वरश्मि ' इति चोदरणे उपन्यस्ते ( क्षीरतरङ्गिणी, पृष्ठ ५४,५५ ) तत्रादिमोऽनुपलब्धमूल । द्वितीय शिशुपालवधीय ( ४।२० )

४ क्षीरतरङ्गिणी १।२९८ । ५ क्षीरतरङ्गिणी १।२९८ व्याख्याने, पृष्ठ ५४ । ६ क्षीरतरङ्गिणी १।२९८ व्याख्याने, पृष्ठ ५४, ५५ । अत्र पुरुषकारस्य कण्टाफल मानुषकण्टक ' इत्यस्य स्थाने 'कण्टाफल पनस कण्टक इत्येव शुद्ध पाठो द्रष्टव्य । यत्त्वत्र गणपतिशास्त्रिणा 'पनस कण्ट-किफल ' इत्यमरपाठम् ( २।४।६१ ) अनुसृत्य कण्टाफल ' इत्यस्य स्थाने 'कण्टकफल ' इति पाठ ऊहित सोऽयुक्त । पनसार्थे कण्टाफलस्य बहुत्र श्रवणात् । ७ अष्टोऽय पाठ । अत्र 'हिक्कादावप्यय गतौ' इति युक्त पाठ स्यात् । ८ उदयति दिननाथ इत्युदाहरन् इति भाव । द्र० क्षीरतरङ्गिणी १।६२२, पृष्ठ १२७ । ९ अनुपलब्धमूल ।

'षिञ् बन्धने' स्वादि क्र्यादिश्च ॥

**ईषद्धासे स्मयेतेति स्माययेतेत्यनादरे ॥ १५ ॥**

'स्मिङ् ईषद्धसने, स्मिट अनादरे। स्मिङ् इत्येके' इति **मैत्रेयरक्षित**[1]। तत्र च स्मिङ्पक्षेऽवयवद्वाराण्यन्तस्यापि ङित्त्वादात्मनेपदम्। 'अवयवे हि कृत लिङ्ग समुदायस्य विशेषक भवति, तच्चेत् तत्राकृतार्थम्। यथा सक्थनि कर्णे वा कृत गो'[2]। 'अट्ट स्मिट अनादरे' इति तु टवर्गान्तकाण्डे **शाकटायन**। **क्षीरस्वामी** त्वाह—'स्निट स्नेहने—स्नेटयति। स्मिटेत्येके। स्फिट अनादरे—स्फेटयति। सस्फेटस्तुमुल युद्धम्'[3] इति ॥

**श्रीणाति पाके श्रीणीते सेवाया श्रयते श्रयेत्।**

'श्रीञ् पाके' क्र्यादि। 'श्रिञ् सेवायाम्' ॥

**मीञो मीनाति मीनीते हिंसाया मीयते ङित ॥ १६ ॥**
**मिनोति मिनुते स्वादेर्गतौ मयति माययेत्।**

'मीञ् हिंसायाम्' क्र्यादि। मीङ् हिंसायाम्' दिवादि। 'डुमिञ् प्रक्षेपणे' [स्वादि]। 'मी गतौ' युजादि। मताविति **क्षीरस्वामी**[4] ॥

**यौ द्रवीकरणेऽनात्वे लीनयेल्लाययेल्लयेत् ॥ १७ ॥**
**लापयेल्लालयेदात्वे श्लेषणे लीयतेऽलिनात्।**

'ली द्रवीकरणे' इति युजादौ पठितस्य लियो 'विभाषा लीयते' (अष्टा० ६।१।५१) इत्यात्वाभावपक्षे 'लीलोर्नुग्लुकावन्यतरस्या स्नेहनिपातने' (अष्टा० ७।३।३९) इति नुकि सति लीनयेदिति

---

१ धातुप्रदीप १०।३८, ३९, पृष्ठ १३३। २ तुलना कार्या—अवयवे कृत लिङ्ग कस्य समुदायस्य विशेषक भवति? य समुदाय सोऽवयवो न व्यभिचरति तद्यथा गो सक्थनि कर्णे वा कृत लिङ्ग गोरेव विशेषक भवति, न गोमण्डलस्य।' महा० १।३।६२॥

३ क्षीरतरङ्गिणी १०।३१,३२, पृष्ठ २८२, २८३। 'सस्फेटस्तुमुल युद्धम्' अनुपलब्धमूलम्। ४ क्षीरतरङ्गिणी (१०।२१७) 'मी गतौ, मनने' इति पठ्यते। कदाचिदत्र 'मी मतौ, मनने इति पाठ स्यात्।

भवति, असति तु लाययेदिति । णिजभावे तु लयेदिति । आत्वपक्षे पुनर्लुगागमे सति लालयेदिति । तदभावे तु पुकि लापयेदिति । तत्रात्वमयुक्त 'विभाषा लीयते' ( अष्टा० ६।१।५१ ) इत्यत्र 'लिनातिलीयत्योर्यका निर्देश'[1] इति भाष्येण युजादिलिय आत्वाभावात् । देवेन तु मैत्रेयरक्षितविस्रम्भादेतदुक्तम्[2] । 'लीङ् श्लेषणे' दिवादि, 'ली श्लेषणे' क्र्यादि । 'प्वादीना ह्रस्व' (अष्टा० ७।३।८०) इति ह्रस्व ॥

**स्रवणे रीयते रीङो रिणाति गतिरेषयो ॥ १८ ॥**

'रीङ् स्रवणे' दिवादि, 'री गतिरेषणयो' प्वादि । रेषण वृकशब्द । यदाह यादवप्रकाश —'वृकस्य रेषण रेषा हेषा ह्रेषा च वाजिनाम्, बृंहित करिणा शब्द'[3] इति ॥

**व्रीणाति वरणे तत्र व्रीङो व्रीयेत तु श्यनि ।**

'व्री वरणे' क्र्यादि । यथा पुन 'प्वादीना ह्रस्व' ( अष्टा० ७।३।८० ) इत्यत्र वृत्ति —'प्वादय क्र्यादिषु पठ्यन्ते पूञ् पवन इत्यत प्रभृति प्ली गतौ वृद्' इति यावद् । केचिदिच्छन्ति वृत्करणमेतत् प्वादीना ल्वादीना च परिसमाप्त्यथमिति । अपरे तु ल्वादीनामेव परिसमाप्त्यर्थ वृत्करणमिच्छन्ति आगणान्ता प्वादय इति[4] तथास्यापि प्वादित्व पक्षे स्यात् । यथा तु ज्ञाजनोर्जा' ( अष्टा० ७।३।७९ ) इत्यत्र भाष्यम्—'दार्घोच्चारण किमथम् ? अतो दीर्घो यञि ( अष्टा० ७।३।१०१ ) इति दीघत्व भविष्यति' इति[5] तथैतन्नेष्यते । यदि हि वृत्त्युक्तरीत्याऽऽक्र्यादिगणान्तात् प्वादय, तदा जानातेरपि प्वादित्वेन ह्रस्वे प्राप्ते तद्व्यावृत्त्यथमेव दार्घोच्चारण स्यादिति, कैमर्थक्य न स्यात् । तस्मादावृत्करणादेव प्वादय । वृत्तिश्च यावदित्यन्तात्रै[6]वाञ्जस्य धत्त । वृत्कृत चैव वृत्त समाप्ताऽय

१ महा० ६।१।५१॥ २ द्र० धातुप्रदीप १०।२५४, पृष्ठ १४४ ।
३ वैजयन्ती, पृष्ठ ३१ । ४ काशिका ७।३।८०॥
५ महाभाष्य ७।३।७९ । ६ वृत्करण प्वादिसमाप्त्यथमेवत्यस्मिन् पक्ष ।

प्वादिल्वादिश्च क्र्यवान्तरगण इत्यर्थक, 'पूञ् पवने' 'लूञ् छेदने' इत्यदूरपाठादुभयोरपि गणयोरवध्यपेक्षायाश्चाविशेषात् । ल्वाद्यानन्तर्यमतन्त्रम् । अतश्च व्रियो वृत्करणात् परत्वेन प्वादित्वाभावात् व्रीणातीति साधूक्त देवेन । व्रीङ् वृणोत्यर्थे, स च वरणम् । अन्योऽप्यर्थो यथाप्रयोग गम्य ॥

**प्रीङ् प्रीतौ प्रीयतेऽप्रीणात् प्रीणाते तर्पणे ञितः ॥१६॥**
**अणौ यौ ञित्त्वसाफल्यात् प्रीणयेत् प्रयते प्रयेत् ।**

'प्रीङ् प्रीतौ' प्रीयते, दिवादि । 'प्रीञ् तर्पणे कान्तौ च' क्र्यादि । कान्ति कामना । 'प्रीञ् तर्पणे' युजादि । तत्र **अणौ** इत्यादेरेषोऽर्थ —यौ तु तर्पणे ञित प्रीणयेदित्यादि स्यात् । न च ञित्त्वादेव प्रयत इतिवत् प्रीणयेतेत्यपि स्यात्, अण्यन्तावस्थाया ञित्वाख्यस्य लिङ्गस्य कृतार्थत्वादिति । तत्र चाद्ये रूपे 'णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम्'[1] इति वार्त्तिकेन नुक् । धूञ्प्रीणोरिति तु पाठे[2] क्र्यादेरेवानेन नुग्विधानात् प्राययेदिति पठितव्यम् । आह चात्र **हरदत्त**—'श्नान्तानुकरणाद् दैवादिकस्य न भवति' इति । दैवादिकग्रहणेन चात्र चौरादिकोऽप्युपलक्षयितव्य । तथा 'धूञ्प्रीणात्योर्नुक्' इति **कौमारा**[3] । **धातुवृत्तिकारा**[4] पुनर्युजादावपि प्रीणयतीत्युदाहरन्तो धूञ्प्रीञोरित्येव पाठ मन्यन्ते[5] । **तन्त्रान्तरीयाश्चैवमेव** पठन्ति ॥

**विहायसा गतौ डीङो डयते डीयते पदे ॥ २० ॥**

'डीङ् विहायसा गतौ', भ्वादिर्दिवादिश्च । विहायसा विहगानाम् । 'डीङ् आकाशगमने' इति भूवादौ **चन्द्र** । तथा **भीमसेनो**ऽप्यत्र विहायसेति पपाठ । **धनपालश्चाकाशगतौ** इति व्याकुर्वन्नेवमेव पपाठ । दिव दौ तु 'डीङ् गतौ' इति **क्षीरस्वामी**[6]**धनपालौ तन्त्रान्तरीयाश्च** ॥

---

१ महा ७।३।३७॥ २ हरदत्तसम्मतोऽय पाठ । ३ 'धूञ्प्रीणात्योर्नुक्' इति कातन्त्रे (कौमारे) पाठ ( ३।८।२४ ) । ४ क्षीरस्वाम्यादय । ६ द्र० क्षीरतरङ्गिणी १०।२५, पृष्ठ ३०८ ॥ ५, क्षीरतरङ्गिणी ४।२५ ॥

**षुञ् सुनोति सुनुते प्रसवैश्वर्ययोरसौत् ।**
**गतौ तयोश्च सवति द्विरुक्त्या[१] तस्य सो न ष ॥ २१ ॥**

'षुञ् अभिषवे' स्वादि । 'षु प्रसवैश्वर्ययो ' अदादिर्भूवादिश्च । 'ओमिति ब्रह्मा प्रसौति'[२] इत्यादिदर्शनात् प्रसवोऽभ्यनुज्ञा । 'उतो वृद्धिर्लुकि हलि' ( अष्टा० ७।३।८९ ) इति वृद्धि । 'सु स्रु गतौ' । **द्विरुक्त्येति** । स्रु गतौ, षु प्रसवैश्वर्ययोश्च इति पाठये सोर्द्विष्पाठाद् गत्यर्थस्य सुसावेत्यादौ षत्व न **भवतीत्यर्थं** । **भाष्ये** तु नैतदिच्छन्ति । यदि ह्यच्पर सादिरप्यषोपदेश स्यात्, तदा **भाष्योक्तम्** 'अजद-न्त्यपरा सादय षोपदेशा[३] इति षोपदेशलक्षणमव्यापक स्यात् । अत एव 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णे ' ( अष्टा० १।३।८६ ) इत्यत्र 'दु द्रु गतौ' इति पठित्वापि 'स्रु गतौ' इत्येव न्यासे पठ्यते, न तु सु स्रु गतौ' इति । अपरे पुन 'शु स्रु गतौ' इति पठन्ति । तथा च 'शु दु द्रु स्रु गतौ' इति **शाकटायन** । **क्षीरस्वामी** तु 'शु श्रु गतौ' इति पठित्वा 'शवति श्रृङ्ग प्ररोह,[४] आशृणोति चैत्रायेति[५] चोदाहृत्य 'श्रु श्रवणे' इत्यस्य स्थाने स्रु गतौ'[६] इत्यपि पपाठ । 'शुसिचिमीना दीर्घश्च' इति **चौणादिसूत्रे**[७] क्रनि शूरशब्दो व्युत्पाद्यते । 'शूर शवतेर्गतिकर्मण ' इति च **नैरुक्ता**[८] । न चान्य शुर्दृश्यते । **उणादिवृत्तौ**[९] तु सौत्रोऽय धातु ॥

**स्थैर्ये ध्रवति गत्या तु स्थैर्ये च ध्रुवतीति शे ।**

'ध्रु स्थैर्ये' । 'शु दु द्रु स्रु गतौ', 'ध्रु स्थैर्ये च' इति **शाकटायन** । 'ध्रु गतिस्थैर्ययो ' ॥

**दुनोति दूयते तापे दवतीति गतौ पदम् ॥ २२ ॥**

---

१ 'द्विरुक्त्यैकस्य' इति पाठा तरम् ।   २ तै० उ० शिक्षा० ८ ।
३ महा० ६।१।६४ ॥   ४ क्षीरतरङ्गिण्या 'शुङ्गाप्ररोह ' इति पाठ, १।६७१, पृष्ठ १४२ ॥   ५ क्षीरतरङ्गिणी १।६७१, पृष्ठ १४२ ।
६ क्षीरतरङ्गिणी १।६७३, पृष्ठ १४३ ।   ७ उणादि २।२५ उज्ज्वल० ।
८ निरुक्त ४।१३ ।   ९ उज्ज्वलदत्तीयोणादिवृत्ताविति शेष (द्र० २।२५) ॥

'टुदु उपतापे' स्वादि । 'दूङ् परितापे' दिवादि । 'द्रु द्रु गतौ ॥

**अव्यक्तशब्दे कवते कुवते त्वार्तशब्दने ।**
**कौतीति शब्दमात्रे स्याद्**

'कुङ् शब्दे' भ्वादिस्तुदादिश्च । अत्रान्त्ये 'गाङ्कुटादि' ( अष्टा० १।२।१ ) सूत्रे **हरदत्त**—'आकूतमिति प्रयोगदर्शनात् कूङ् शब्दे इति दीर्घान्त'[१] इति । 'अन्ये कूङिति पठन्ति आकूतमिति प्रयोगदर्शनाद्' इति **धनपाल** । ऊकारान्तोऽप्यङ्गीचक्रे आकूतमाकूत्यै' इति भूवादि ( अष्टा० १।३।१ ) सूत्रे **सुधाकर** । कुङ् कूङ् इति च **शाकटायन** । कु शब्दे' अदादि । तदेव यद्यप्येते शब्दमात्रे पठ्यन्ते तथाप्यर्थविशेष प्रयोगवशादाश्रीयते । तथा च न कवतेर्यङि' ( अष्टा० ७।४।६३ ) इत्यत्र **न्यास**—'सत्यपि शब्दार्थत्वे भिद्यत एवैषामभिधेयम् । तथा च कवतिरव्यक्तशब्दे वर्तते—उष्ट्र कोकूयते । कुवतिरार्तस्वरे—कुवते पीडित इति । कौतीति शब्दमात्रे'[२] इति । **क्षीरस्वामिमैत्रेयरक्षितौ** च 'कु शब्दे' इत्यत्रैतामेव व्यवस्थामातस्थाते[३] । सर्वत्रैव प्रयोगविशेषादर्थविशेषोऽप्यनेकार्थत्वादास्थेय । न पुन पाठ एव शरणम् ॥

**रवते रौति शब्दने ॥ २३ ॥**

'रुङ् गतिरेषणयो' अत्र च रेषणस्य वृकशब्दत्वाच्छब्दन इत्येक[४] नेतव्यम् । एतच्च[५] गतेरपि उपलक्षणम् । 'रुङ शब्दे' इत्येव तु पाठे सति शक्यमक्लेशेन नेतुम् । यथा त्वत्र **क्षीरस्वामी**—'रेषण हिंसाशब्द ।

---

१ पदमञ्जर्यां ( भाग १, पृष्ठ १४८ ) किञ्चित् पाठभेद । २ न्यासे त्वेव पाठ —'सत्यपि हि शब्दार्थत्वे भिद्यत एवषामभिधेयम् । तथाहि कवतिस्ताव दव्यक्ते शब्दे वर्तते—उष्ट्र कोकूयत इति । कुवतिरप्यार्तस्वरे वर्तते—चोकूयते वृषल इति, पीडित इत्यर्थ । कौतिस्तु शब्दमात्र ।' भाग २, पृष्ठ ८६७ ।

३ द्र० क्षीरतरङ्गिणी २।३५, पृष्ठ १७४, धातुप्रदीप २।३३, पृष्ठ ८० ।

४. एक रुङ् धातुमित्य ५. एतच्च 'शब्दने' इत्येतच्चेत्यर्थ ।

रवते । अदादौ रु शब्दे रौति'[1] इति । यथा चादादौ 'रु शब्दे रौति, भ्वादौ रुङ् गतिरेषणयो रवते'[2] इति, तथा चाय पाठो[3] नैवास्तीति गम्यते ॥

**यावयेत जुगुप्सायां मिश्रणे यौति बन्धने ।**
**युनाति च युनीते च**

'यु जुगुप्सायाम्' । चितादि[4]त्वात् तङ् । यदाह[5]—'आकुस्मादात्मनेपदी' इति । 'चित सचेतने' इत्याद्या कुस्म इत्यन्ता धातव आत्मनेपदिन इत्यर्थः । 'युज कुत्सायाम्' इत्येके । योजयते[6] इति **क्षीरस्वामी** । 'यु मिश्रणे' अदादि । 'युञ् बन्धने' क्र्यादि ॥

**स्तुत्या नुवति नौति वा ॥ २४ ॥**

'णू स्तवने' तुदादिर्दीर्घान्त । तथा च 'गाङ्कुटादि' ( अष्टा० १।२।१ ) सूत्रे 'नूत्वा धूत्वा' इति **भाष्यम्** । 'णु स्तवने' अदादि ॥

**प्रेरणे सुवति प्राणिप्रसवे सूयते भवेत् ।**
**प्राणिगर्भविमोकेऽर्थे सूते शे श्यनि शब्लुकि ॥ २५ ॥**

'षू प्रेरणे', 'षूङ् प्राणिप्रसवे' । 'अप्राणिप्रसवे' **इत्येके** । तथा च **क्षीरस्वामी** प्रसून पुष्पमिति निष्ठानत्वमुदाहृत्याह—'अत एवाप्राणिप्रसव इत्याहु'[7] इति । **न्यासकारस्तु**—'स्वरतिसूतिसूयतिधूञूदितो वा' ( अष्टा० ७।२।४४ ) इत्यादिषु षूङ्विषयेषु 'प्राणि' इत्येव पपाठ । धातुपाठाश्चैवमेव बहुलमुपलभ्यन्ते । यथा 'प्रसून कुसुम सुमम्'[8] इत्यत्र **कविकामधेनु**—'षूङ् प्राणिप्रसवे । क्षपण-

---

१ क्षीरतरङ्गिणी १।६८३, पृष्ठ १४६ । २ क्षीरतरङ्गिणी २।२६, पष्ठ १७३ । ३. रुङ् शब्दे' इति । ४ चित सचेतने, चुरादि १०।१२४ क्षीर० । ५ धातुपाठकार इति भाव । १०।१२३ क्षीर० ।
६ क्षीरतरङ्गिणी १०।१५६, पृष्ठ २९७ । तत्र 'युज स्थाने 'युजु' पाठ ।
७ क्षीरतरङ्गिणी ४।२१, पृष्ठ २०२ । तत्र 'इत्याहु' स्थाने 'इत्यन्ये' पाठः ।
८ अमर २।४।१७ ॥

क्रमतेन[१] वृक्षस्यापि प्राणित्वम् । 'स्वादय ओदित' इति कस्य नत्वम् इति । तथा 'अत एवे'त्युक्तयुक्ति[२]श्च प्रत्युक्ता । तत्र च क्षपणकग्रहण तेषामहिसाया सूक्ष्मेक्षिकाभिमानात् । न पुनरपरेषामनभिमतोऽयमर्थ इति । तच्चैतत् प्राणित्व[३]मयुक्तम्, यतो लोक इव व्याकरणेऽपि[४] प्रसिद्धिवशादेव तत्र तत्र प्राण्यप्राणिव्यवस्था स्थीयते[५] । लोके चाप्राणित्व वृक्षादे प्रसिद्धम् । तथा च 'ऊङुत' (अष्टा० ४।१।६६) इत्यत्र 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति वार्त्तिक 'प्रकृत्यालाबूः कर्कन्धूरित्युदाहरता भाष्यकारेणापि स्थीयते । अत एव मैत्रेयरक्षितेन 'प्राणिग्रहणमतन्त्रम्, अप्राणिप्रसवेऽपि वतते । प्रसून धान्यमिति'[६] इत्युक्तम् । 'षूङ् प्राणिगर्भविमोचने' ॥

**धूनयति धवति धवते धुनोति धुनुते धुनाति च धुनीते ।**
**धूनोति धूनुते स्यु पदानि कम्पे विधूनने धवति ॥२६॥**

'धूञ् कम्पने' युजादि,[७] प्वादि[८] स्वादिश्च । तत्राद्ये प्रीञ्वत् त्रैरूप्यम् । क्षीरस्वामी तु 'धावयतीत्येके'[९] इति । मैत्रेयरक्षितादयश्च ह्रस्वान्त चान्त्यमाहु[१०] । तथा च 'घृसृधुवृषिप्रच्छिज्वरित्वरिभ्य कित्'[११] इति धुञो धुनिशब्दो भोजदेवेन व्युत्पादयाञ्चक्रे । एभ्यो धातुभ्य सज्ञाया गम्यमानाया निन्[१२] प्रत्ययो भवति, स च किदित्यर्थं । घृणि –

---

१ 'क्षपणक मते' इति पाठान्तरम् । २ 'अत एव' इत्येव क्षीरस्वाम्युक्ता युक्तिरित्यथ । ३ क्षपणकमतोक्त वृक्षाणा प्राणित्वम् ।

४ तुलनीयम्—नहीद लोकाद् भिद्यते । यदीद लोकाद् भिद्यत, ततो यत्नार्हं स्यात् । महा० १।१।१ ॥ ५ इह चोत्तरत्र च 'स्थीयते' आस्थीयत इत्यथ ।

६ धातुप्रदीप ४।२६, पृष्ठ ६१ ( स्वल्पस्तत्र पाठभेद ) । ७ युजादिश्चुरावन्तर्गण ( द्र० क्षीर० १०। २०२—२३६, तत्र धूञ २२४ ) ।

८ प्वादि क्र्याद्यन्तगण ( द्र० क्षीर० ६।११—३३, तत्र धूञ् १६ ) ।

९ क्षीरतरङ्गिणी १०।२२४ । तेषा मते 'धूञ्प्रीञो' रिति वार्तिकपाठ इति भाव

१० धातुप्रदीपे ५।६, पृष्ठ १०३ । ११ सरस्वतीकण्ठाभरण २।१।२१०॥

१२ मद्रासमुद्रिते भोजीयोणादिवृत्तिखण्डे 'नित् प्रत्यय ' इति पठ्यते । पूर्वतने सूत्रे ( २०८ ) ऽपि 'नित्' इत्येव पाठ उपलभ्यते । त्रिवेण्ड्रमसस्करणे तूभयत्र 'निन्' इत्येव पाठ । पर तत्र 'घृसृ' इत्यस्य सूत्र सख्या २०९ वतते ।

रश्मि । सृणिरङ्कुश । धुनिर्नदी । वृष्णी राजा, यद्वश्या वृष्णय । पृश्निरल्पतनु । 'ग्रहिज्या' (अष्टा० ६।१।१६) इति सम्प्रसारणम् । 'छ्वो शूडनुनासिके च' ( अष्टा० ६।४।१९ ) इति च्छस्य श । जूर्णिर्वृद्ध । तूर्णि शीघ्र । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ( अष्टा० ६।४।२० ) इत्युपधावकारयोरूठ् । प्रयोगश्च 'न स्नात्वा वासो धूनुयात्',[१] ऊर्ध्वं धूनोति वायुर्विवृतशवशिर श्रेणिकुञ्जेषु गुञ्जन्'[२] इत्यादिर्भूवादि ( अष्टा० १।३।१ ) सूत्रे **सुधाकरेण** दर्शयाम्बभूवे[३] । सर्वथापि—

धूनयति धवति धवतेऽधुनाद् धुनीते च धूनुतेऽधूनोत् ।

धुनुतेऽधुनोदिति स्यु

इत्यनेन क्रमेण पठितु युक्ततरम्[४] । 'धू विधूनने' तुदादि ॥

**श्नि पुनाति पुनीते स्ता पवने पवतै ङित ।**

'पूञ् पवने' । पूङ् पवने' ॥

**प्रसृह्य हृत्या हरणे जिहर्त्ति हरते हरेत् ॥ २७ ॥**

हृ प्रसह्यहरणे' जुहोत्यादि । 'हृञ् हरणे' । तत्र चाद्यो घृप्रभृतित्वाच्छान्दस[५] । स च जिघर्तीति दृश्यते—'अय स्रुवो अभिजिघर्त्ति होमान्'[६] इति । 'भृञामित्' 'बहुल छन्दसि' ( अष्टा० ७।४।७६, ७८ ) इत्यभ्यासस्येत्वम् । घृप्रभृतीना छान्दसत्वम् 'अर्त्तिपिपर्त्योश्च' ( ७।४ ७७ ) इत्यत्र भाष्यतद्व्याख्यानयोर्व्यक्तम् ॥

---

१ अनुपलब्धमूलम् ।  २ मालतीमाधव ५ अङ्क ।

३ 'दशमामासे' पाठा० ।  ४ यथास्थितपाठे स्वादिविषयकप्रयोगाणा मध्ये क्र्यादिप्रयोगनिर्देश स्वादिविषयकपक्षान्तरप्रतिपत्तौ क्लेशमादधाति इति भाव ।  ५ गणान्ते 'छन्दसि' ( ३।२५ ) इति वचनात् घृप्रभृतीना छान्दसत्वम् ।  ६ आप० श्रौत ४।७।२।

**भृञो बिभर्त्ति बिभृते भरते भरतीत्यपि ।**
**ॠदन्तस्य भृणातीति भर्त्सने भ्रि तथा भर ॥ २८ ॥**

'डुभृञ् धारणपोषणयो' जुहोत्यादि । 'टुभृञ्' इत्येके । तथा च भृत्रिममित्युक्त्वा भरथुरिति केचिदिति[1] **मैत्रेयरक्षित** । **क्षीरस्वामी** तु 'टुभृञिति द्रमिडा, भरथु'[2] इति । **सुधाकर** पुनरथुज्विधौ 'टुभृञ्' इत्युक्त्वा डुभृञिति द्रमिडा पठन्ति । तेन भृत्रिम भरथुरिति द्वयमिच्छति **नन्दी**' इति । टुडुभृञ् इत्यनुबन्धद्वयमिति **शाकटायन** । तन्मते हि 'अप्रयोगीद्'[3] इतीत्त्वम् । **अत्रामोघा**—'इह शास्त्रे उपदिश्यमानो वर्ण समुदायो वा यो लौकिके शब्दप्रयोगे न दृश्यते स इत्सञ्ज्ञो भवति । अतएव चास्य प्रयोगाभाव सिद्ध । उपदेशस्तु कार्यार्थ'[4] इति । तत्र च भरणेन निवृत्त भृत्रिमम् । 'ड्वित क्त्रि' ( अष्टा० ३।३।८८ ) इति क्त्रि । 'क्त्रेमब् नित्यम्' ( अष्टा० ४।४।२० ) इति मप्, भरण भरथु । ट्वितोऽथुच् ( ३।३।८९ ) इत्यथुच् । 'भृञ् भरणे', 'वॄ वरणे,' 'भॄ भर्त्सने' च प्वादि[5] 'वॄ भॄ भरणे, भॄ भजने च, भजन पाक'[6] मिति **क्षीरस्वामी** । स चात्र भर्जनाख्य पाकभेद एव प्रसिद्धो बोद्धव्य । 'ॠजि भृजी भजने'[7] इत्यत्र च स एवाह—'भजन पाकप्रकार'[7] इति । भरणपाठे[8] च भरस्य भारपर्यायत्वादौचित्य व्यक्तम् । स च ॠदन्तपाठफलम्[9] । 'ॠदोरप्' ( अष्टा० ३।३।५७ ) इत्यप् ।

**ध्रियते स्यादवस्थाने धृङोऽवध्वसने पुन ।**
**धरते धारणेऽर्थे तु धरते धरतीत्युभे ॥ २९ ॥**

---

१ धातुप्रदीप ३.५, पृष्ठ ८६ । 'भरथुरित्यन्ये' इति तत्र पाठ ।
२ क्षीरतरङ्गिणी ३।५, पृष्ठ १९१ ।।
३ जैन शाकटायन १।१।५।।
४ अमोघावृत्ति १।१।५।।
५ क्र्याद्यन्तगण ।
६ क्षीरतरङ्गिणी ९।२०, २१, पृष्ठ २६९, २७० ।
७ क्षीरतरङ्गिणी १।९१०, पृष्ठ ३६ ।
८ 'भॄ भरणे' इति पाठे ।
९ दीर्घ-ॠकारान्तत्वादपि भर, भारपर्याय ।

'धृङ् अवस्थाने' तुदादि । 'रिङ्शयग्लिङ्क्षु (अष्टा० ७।४।२८) इति रिङ्, इयङादेशश्च । 'धृङ् अवध्वसने' । 'अविध्वसने' इति **क्षीरस्वामी**[1] । अपरे ऽप्येव बहव । 'धृञ् धारणे', 'धृ धारणे' इत्यपि चुरादौ **क्षीरस्वामी**[2] । तत्र धारयति धारयते । चुरादेराकृतिगणत्वाद् धारयतीति **हेमचन्द्र** । **न्यासे** तु 'धारेरुत्तमर्ण' (अष्टा० १।४।३५) इत्यादिषु ध्रियतेर्हेतुमण्णिच्येव धारिर्व्युत्पाद्यते । 'षिद्भिदादिभ्योऽङ्' ( अष्टा० ३।३।१०४ ) इत्यत्र 'धारा प्रपातन इति वक्तव्यम् । धृतिरन्या' इति **भाष्यम्** । तत्र च धृतिरन्येति ब्रुवता 'ऋदृशोऽङि गुण ( अष्टा० ७।४।१६ ) इति गुणे कृते दीर्घत्वनिपातनेन धरतेरेव धारा इत्यभिप्रेयते । न पुन समानार्थत्वेऽपि धारयते । यदि च सोऽपि चुरादिष्वपठिष्यत्, धारणाऽन्येत्येवावक्ष्यत, कृत निपातनक्लेशेन ॥

**गतौ सर्सर्त्ति सरति श्लुशपोर्धावति क्वचित् ।**

'ऋ सृ गतौ' घृप्रभृतित्वाच्छान्दसोऽन्त्य[3] । स च सिसर्त्तीति दृश्यते । 'प्र बाहवा पृथुपाणि सिसर्त्ति'[4] इति । 'सृ गतौ' । 'सर्त्ते-र्धावादेशो वेगिताया गतौ' इति वार्त्तिकेन सञ्जातवेगाया गतौ शपि धौभाव । **क्षीरस्वामी** तु चुरादौ 'घृ स्रावणे' इति पठित्वा 'घृ सृ आवरणे इति पूर्वे पेठु । घर स्रावणे इति दुर्ग '[5] इति । सरति सिसर्त्योश्च स एवाह—'चुरादौ सारयति'[6] इति ।

**तत्रेयर्त्यृच्छतीत्यर्त्ते श्नि गतौ स्याद् ऋणाति तु ॥ ३० ॥**

**तत्रेति** पूर्वोक्त एव विषय इत्यर्थ । तेन गतौ श्लुशपो 'अर्त्ते'' ऋ सृ गतौ, ऋ गतिप्रापणयोरित्यनयोरियर्त्ति ऋच्छतीति भवतीति

१ क्षीरतरङ्गिण्यां ( १।६८४, पृष्ठ १४६ ) तु 'अवध्वसने' इत्येव पाठ ।

२ चुरादौ तु क्षीरतरङ्गिण्या नाय धातु पठ्यते । भौवादिके ६८४ धातुसूत्र-व्याख्याने एव 'चुरादौ धृ धारणे, धारयति' इति पाठ क्षीरतरङ्गिण्यामुपलभ्यते ( पृष्ठ १४६ ) । ३ अन्त्य सृ-धातुरित्यर्थ, । ४ ऋ० २।३८।२॥

५ क्षीरतरङ्गिणी १०।६८, पृष्ठ ३६० । तत्र 'घर स्रवण इति दुर्ग ' इति पाठ ।

६ द्र० क्षीरतरङ्गिणी १।६६७, पृष्ठ १४१, ३।१७, पृष्ठ १६५ ।

वाक्यार्थ । तत्र चाद्ये शपश्लुद्विर्वचनादेरत्त्वहलादिशेषेषु कृतेषु 'अर्त्ति-पिपर्त्योश्च' ( अष्टा० ७।४।७७ ) इत्यभ्यासस्येत्त्वम् । 'अभ्यासस्या-सवर्णे' ( अष्टा० ६।४।७८ ) इतीयडादेश । ततो गुण । अस्य चार्त्तेर्घृप्रभृतित्वेऽपि भाषायामपि प्रयोग इष्यते । तच्च 'बहुल छन्दसि' ( अष्टा० ७।४।७८ ) इत्येवेत्त्वे सिद्धेऽर्त्ते पृथगित्वविधान-सामर्थ्यादवसीयते इति 'अर्त्तिपिपर्त्योश्च' ( अष्टा० ७ ४।७७ ) इत्यत्र भाष्ये स्थितम् । अन्त्ये पाघ्राध्मा' ( ७।३।७८ ) इति ऋच्छादेश । 'ऋ गतौ' ल्वादि[१] ॥

**हिंसाकरणयो श्नावौ कृणोति कृणुते कृञ ।**
**करोति कुरुते द्वे द्वे सम्पद्येते पदे क्रमात् ॥ ३१ ॥**

'कृञ् हिंसायाम्' 'डुकृञ् करणे' । तथा 'कृञ् करणे' इति भूवादौ क्षीरस्वामी[२] । करोति कृणोति करतीति वा कारुरिति

---

१ क्र्याद्यन्तगण । २ क्षीरतरङ्गिणी १।६३६, पृष्ठ १३० ।

अत्रेदमवधेयम्—प्रायेण सर्व एव प्राचीना देव-पाल्यकीर्ति हेमचन्द्र-दशपाद्युणा दिवृत्तिकारादय कृञ भ्वादौ पठति । अस्य भ्वादिस्थस्यैव प्रयोगा पालि-प्राकृतभाषयोरुपलभ्यन्ते । हिन्दीभाषायामपि 'करता है' इति भ्वादिस्थस्यै-वापभ्रंश, न तु करोते । एतेन कृञो भ्वादिष्वविगीत एव पाठ । सायणेन 'उपो षु शृणुहि' ( १।८२।१ ) मन्त्रव्याख्याने धातुवृत्तौ ( पृष्ठ १६३ ) चास्य महता प्रपञ्चेन भ्वादित्व निराकृतम् । ये च तत्र हेतवो निर्दिष्टास्ते सर्वे हेत्वा-भासा एव । भट्टोजिदीक्षितादय 'सायणमेवानुययु । वस्तुत, कृञो भ्वादावेव पाठ, न तु तनादौ । अत एव पाणिनिना 'तनादिकृञ्भ्य उ' ( ३।१।७९ ) सूत्र तनादिभ्य पृथक् कृञ पाठ कृत । सति तनादौ पाठे सूत्रे कृञ पृथक् पाठोऽनुचित एव । एतेनानुमीयते—कदाचिदौत्तरकालिकैरयं तनादिषु प्रक्षिप्त स्यात् । 'तनादिकृञ्भ्य उ' इति सूत्रभाष्यपर्यालोचनया ज्ञायते यत् पतञ्जले प्रागेवास्य तनादिषु प्रक्षेपो बभूव । एतत्सर्वमवबुध्य दीर्घदर्शिना स्वामिदया-नन्देन 'अव रुद्रमदीमहि' ( यजु ३।५८ ) मन्त्रव्याख्याने उक्तम्—"डुकृञ् करणे इत्यस्य भ्वादिगणान्तर्गतपाठात् शब्विकरणोऽत्र गृह्यते, तनादिभि सहपाठाद् उविकरणोऽपि ।" अत्र तनादिभिस्सहपाठादित्यस्य 'तनादिकृञ्भ्य उ' इति सूत्रे सहपाठादित्यर्थो ज्ञेय । स्वामिदयानन्दस्य गुरो श्रीमद्-

कस्याचिद् उणादिवृत्तौ[1] दृश्यते। न्यासकारस्तु 'कृ करत्करतिकृधि-कृतेष्वनदिते' (अष्टा० ८।३।५०) इत्यत्र करतौ व्यत्ययेन शप ब्रुवन्नै-तमनुमन्यते ॥

**भक्तौ वृणीते वरणे वृणोति वृणुते वृञ ।**
**वृञ आवरणे वा णौ वारयेद् वरते वरेत् ॥ ३२ ॥**

'वृङ् सम्भक्तौ' क्र्यादि। 'वृञ् वरणे' स्वादि। 'वृञ् आवरणे'। अत्र **क्षीरस्वामी**—'आवारयति, आवरति, आवरते। स्वादौ वृणुते वृणोति। क्र्यादौ वृणीते। तुदादौ वृङ् सम्भक्तौ व्रियते'[2] इति ॥

**ज्ञाने गारयते गिरेन्निगरणे शब्दे गृणाति त्रयम्,**
**युक्त ओ गरतीति सेकविषये ह्रस्वान्तधातो शपि।**
**सेके प्रस्रवणे क्रमाच्छपि णिचि स्याता घरेद् घारयेद्,**
**यद्दीप्तौ क्षरणे जिघर्त्ति तदिद केचिद्विदुश्छान्दसम् ॥३३॥**

'गॄ विज्ञाने' चितादि[3]। 'कॄ इति चन्द्र। 'गॄ निगरणे' तुदादि। निपूर्वताप्राचुर्योपदर्शनार्थो नि। 'अचि विभाषा' (अष्टा० ८।२।२१) इति लत्वविकल्पाद् गालयते गिलेद् इत्यपि द्रष्टव्यम्। 'गॄ शब्दे' ल्वादि। एव त्रिष्पठितस्य 'गॄ' इत्येतस्यैतत् त्रैरूप्य युक्तम्। अन्त्ययोरेव धात्वो प्रसिद्धत्वाद्रूपद्वयमेवेति मन्दैर्मा शङ्की-त्याशय। 'गृ घृ सेचने'। यथा तु 'तृज्वत् क्रोष्टु' (अष्टा ७।१।९५) इत्यत्र **भाष्यम्**—'अविशेषविहिता शब्दा नियतविषया दृश्यन्ते। घरतिरस्मायविशेषेणोपदिष्ट। स घृत घृणा घर्म इत्येवविषय'[4]

---

विरजानन्दस्वामिनो हरिवशनाम्ना शिष्येण लिखितस्य धातुपाठस्यैको कोशो विश्वेश्वरानन्दसस्थाने होशियारपुरनगरे विद्यते (एतस्य प्रतिलिपिरस्मत्स-काशेऽपि वर्तते)। तस्मिन् कोशेऽपि तनादौ कृञ पाठो नोपलभ्यते।

१ दशपाद्युणादिवृत्तौ। द्र० १।७६, पृष्ठ ५२,५३ (अस्मत्सम्पादिता)। दशपादी-वृत्तावन्यत्रापि बहुत्र कृञो भ्वादित्व स्वीक्रियते। २ द्र० क्षीरतरङ्गिणी १०।२०८, पृष्ठ ३०६। अत्र 'तुदादौ वृङ सम्भक्तौ व्रियते' इति पाठ क्षीरत-रङ्गिण्या नास्ति। ३ चितादिश्चुराद्यन्तर्गण। ४ महा० ७।१।९५॥

इति, तथा **घरेदिति** नेष्यते । देवस्तु **मैत्रेयरक्षिते**नैकीयमतत्वेन 'घरती' त्युदाहृतमुपलभ्यैतदभ्यधात् । 'घृ प्रस्रवणे' । 'घृ स्रावणे' इति **क्षीरस्वामी**[1] । 'घृ क्षरणदीप्तयो' जुहोत्यादि । अत्र मैत्रेयरक्षित – ''जन जनने, जजन्ति । गा स्तुतौ, जिगाति । छन्दसि' **इति** छान्दसावेतौ । घृप्रभतयोऽपि छान्दसा इति केचित्''[2] इति । गा स्तुतौ ( ?, घृ क्षरणे ) तत्स्थ एवात्र[3] ग्राह्य । **केचिद** शब्दो **भाष्यानुसारिण**[4] इत्येव व्याख्येय । तत्रापि जिघर्तीति छन्दसि दृश्यते । 'वरिष्ठ वज्रमाजिघर्ति मायिनि'[5] इति ॥

**प्रीतौ पृणोत्यृदन्तस्य व्यायामे प्रियेत पृङ ।**

'पृ प्रीतौ' स्वादि । 'पृङ् व्यायामे' तुदादि । व्याप्रियते ।

**मृणाति हिंसार्थे प्वादेर्मृङस्तु म्रियते पदम् ॥ ३४ ॥**

कॄ हिंसायाम्', 'मॄ इत्येके' इति **मैत्रेयरक्षित**[6] । **क्षीरस्वामी** तु 'मॄ हिंसायाम्' इत्यपि पृथक पपाठ[7] । किन्तु 'बॄ' इति पवर्गतृतीयोपधतया **मैत्रेयरक्षितपठितस्य**[8] स्थाने 'मॄ' इति । 'मृङ् प्राणत्यागे' तुदादि ॥

**स्तॄञ श्नि च्छादने प्वादे स्तृणीते च स्तृणाति च ।**
**श्नावृदन्तस्य तत्रैव स्तृणोति स्तृणुते स्तृञ ॥३५॥**

'स्तॄञ् छादने', 'स्तृञ् छादने' ।

**दरेद् दृणाति द्रियते क्रमाद् भीदारणादरे ।**

---

१ क्षीरतरङ्गिणी १०।६८, पृष्ठ २६० । २ धातुप्रदीप, पृष्ठ ८८, पाठभेदेन ।

३ तत्स्थ = जुहोत्यादिस्थ एवेत्यथ । अत्र 'गा स्तुतौ' इति स्थाने 'घृ क्षरणे' इति पाठो युक्त स्यात् । ४ यास्कोऽपि छा दसमेवाह । तथाहि—अथापि नैगमेभ्यो भाषिका, उष्ण घृतमिति ( निरुक्त २।२ ) ।

५ ऋ० ५।४८।३॥ ६ धातुप्रदीप ६।२६, पृष्ठ १२७ ।

७ क्षीरतरङ्गिणी ६।१६, पृष्ठ २६६ । ८ मुद्रिते धातुप्रदीपे तु 'बॄ' इति दन्त्योष्ठ्यवान् एव पठ्यते, तु पवर्गतृतीयोपध । अत्र दैवस्य ३७ श्लोकव्याख्यानमप्यनुसन्धेयम् ।

'दृ भये' घटादि । अत्र **मैत्रेयरक्षित**—'दृ विदारणे क्र्यादि । तस्य मित्त्वार्थं पाठ । धात्वन्तराभ्युपगमे दरतीत्येके'[१] इति । **धनपालहरियोगिपूर्णचन्द्रा**स्तु दरतीत्येवाहु । **क्षीरस्वामी** त्वाह-दृ भये, दरति । क्र्यादौ दृ विदारणे, तस्यैव मित्त्वार्थं इह पाठ इत्येके । दिवादौ दीर्यते इति **पञ्चिका** । कर्मकर्तरि दीर्यत इत्येके'[२] इति । **धनपालशाकटायनौ** तु क्र्यादौ च 'दृ भये' इत्येवाहतु । 'दृङ् आदरे' तुदादि । आद्रियते ॥

**पृणाति पूरणे श्लौ तु पिपर्त्ति णिचि पारयेत् ॥ ३६ ॥**

'पृ पालनपूरणयो' प्वादि । श्लौ त्वय ह्रस्वान्त[३] । तथा च 'त रोदसी पिपृत सत्यवाचम्'[४] इति श्रूयते । **मैत्रेयरक्षितस्तु** ह्रस्वान्त पठित्वा 'दीर्घान्तोऽयमित्येके'[५] इत्याह । तत्फलभेदश्च 'पिपृत पिप्रति पिपूर्त पिपुरति'[६] इति । तत्र च 'उदोष्ठ्यपूर्वस्य' ( अष्टा० ७।२।१०२ ) इत्युत्त्व रपरत्व च । 'हलि च ( अष्टा० ८।२।७७ ) इति दीर्घ । **क्षीरस्वामी** तु दीर्घान्त पठित्वा ह्रस्वान्तोऽयमिति नन्दी'[७] इति । 'पृ पूरणे' । अत्र च स[८] एवाह—पृ इति दुग । पारयति परति'[९] इति । एतच्च चुरादिणिचोऽनित्यत्वाश्रयेण ॥

**वृवञोरञितो धातोर्वृणाति वरणे भवेत् ।**
**वृणाति च वृणीते वृञस्तत्रार्थं इष्यते ॥ ३७ ॥**

'वृ वरणे', 'वृञ् वरणे' प्वादि । वृवञोरिति निर्धारणे षष्ठी ।

---

१ धातुप्रदीप, पृष्ठ ५७, पाठभेदेन ।  २ क्षीरतरङ्गिणी १।५४५, पृष्ठ ११७॥
३ द्र० धातुप्रदीप ३।४, पृष्ठ ८६ ।  ४ ऋ० ३।२६।६॥
५ द्र० धातुप्रदीप ३।४, पृष्ठ ८६, पाठभेदेन ।  ६ द्र० धातुप्रदीप ३।४, पृष्ठ ८६ ।  ७ क्षीरतरङ्गिणी ३।४, पृष्ठ १६१ ।
८ स एव क्षीरस्वामीत्यथ ।  ९ द्र० क्षीरतरङ्गिणी १०।१५, पृष्ठ २८१, तत्र 'पारयति परति' इत्यशो न पठ्यते ।

तत्र चाद्य पवर्गतृतीयादि बहव पठन्ति । 'बॄ भरणे' इति **क्षीरस्वामिशाकटायनौ**[१] ॥

**सिद्धे पदद्वये वॄञो ञित्त्वाद् यदञितो वच ।**
**फले तत् कर्त्रभिप्राये परस्मैपदसिद्धये ॥ ३८ ॥**

वॄञो ञित्त्वाद् 'वृणाति वृणीते' इति सिद्धे वॄ इत्यञित्पाठ कर्त्रभिप्राये क्रियाफले परस्मैपदा० ॥

**जृणाति जीर्यति जरत्येकार्थे जारयत्यपि ।**

'जॄ वयोहानौ' । सा च यौवनादेस्याग । प्वादिर्युजादिश्चायम् । तत्राद्ये 'धॄ इत्येके'[२] इति **मैत्रेयरक्षित** । अन्त्ये तु **क्षीरस्वामी**–'जारयति जरति, दिवादौ जीर्यति, क्र्यादौ जृणाति । ज्रीति च **नन्दी** । ज्राययति, ज्रयति । क्र्यादौ जृणाति'[३] इति । जॄष् झॄष् वयोहानौ' दिवादि । अस्य तु हेतुमण्णिचि 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च'[४] इति मित्त्वाज्जरयति इति द्रष्टव्यम् । 'जनी प्रादुर्भावे' क्नसु ह्वरणदीप्त्यो', 'रञ्ज रागे' इत्येते जीर्यतीऽचामूरूपान्ताश्च धातवो मितो भवन्तीत्यर्थं ॥

**कृणन् कृणीते हिसाया विक्षेपे किरतीति शे ॥ ३९ ॥**

'कॄञ हिसायाम्' प्वादि । कृञ् इत्येके' इति[५] **क्षीरस्वामी** । तिङ्प्रकरणेऽपि शत्रन्तोदाहरण वृत्तानुरोधात्[६] । 'कृणाति च कृणीते च हिसाया किरतीति शे' इत्यनुक्ति परस्मैपदाद्येवात्रविवक्षितम्'[७] इति प्रागुक्तमर्थ बालाना व्यङ्क्तुमिति गमयितव्यम् । एव 'बध्नन् बीभत्सते बन्धे'[८] इत्यत्रापि 'बन्धे बीभत्सने (ते, ऽब्रध्नाद्'

१ क्षीरतरङ्गिण्या 'वॄ' इति दन्त्योष्ठ्यवानेव पठ्यते । एवमेव च मुद्रिते शाकटायनधातुपाठेऽपि । २ धातुप्रदीपे 'चॄ इत्येके' इति पाठ (द्र० ९।२३, पृष्ठ १२६ ) । ३ क्षीरतरङ्गिणी १०।२०९, पृष्ठ ३०६, तत्र 'क्र्यादौ ज्रिणाति' इति पाठ । ४ क्षीरतरङ्गिणी धातुसूत्र १।५५४॥
५ क्षीरतरङ्गिणी ९।१३, पृष्ठ २६८ । ६ श्लोकानुरोधादित्यथ ।
७ पुरुषकार पृष्ठ १०, पङ्क्ति ११ । ८ दैवश्लोक १२०, पाठान्तरम् ।

इत्यनुक्तिर्नेतव्या । 'तृ कृ[1] हिंसायाम्' इत्यपि प्वादावेव **क्षीरस्वामिमैत्रेयरक्षितौ** । तत्फल तु वृवद्[2] द्रष्टव्यम् । 'कृ विक्षेपे' किरतीति ॥

**तृप्तौ चकेत् प्रतोघाते तृप्तौ च चकते शपि ।**

'चक तृप्तौ' घटादि । 'चक्क तृप्तौ प्रतीघाते च' ।

**क्वचित्** पुन पठयते—

**प्रतीघाते च तृप्तौ च चकते चकतीति तु ।**
**तृप्तिमात्रे चकेरस्य मित्त्वाच्चकयतीति णौ ॥**

इति । तयोश्च पाठयोस्तृप्ताविति तृप्तिमात्र इति च घटादिपाठपरम् । शेष च प्रदेशान्तरपाठपरम् । ततश्च यद् घटादौ च **शाकटायनेनो**भयार्थत्वमुक्तम्, यच्च **क्षीरस्वामिना** घटादावुभयार्थ[3]त्वमन्यत्र तृप्त्यर्थत्व[4] तदपि सगहीत भवति । **धनपाल** पुनरात्मनेपदिन 'चक तृप्तावि'त्येव **पठित्वा** तस्यैव चक तृप्तौ प्रतीघाते च' इति घटादौ 'घटादयो मित '[5] इति मित्सज्ञार्थ पाठ मन्यमानस्तत्राप्यात्मनेपदमेवोदाजहार[6] ॥

**दर्शने लोकते लोकेर्भाषार्थे णौ तु लोकयेत् ॥ ४० ॥**

'लोकृ दशने', लोकृ भ षार्थे ' । अस्माच्च सकमकादेव णिच् स्यात् । यदाह—'आस्वाद सकर्मकाद्'[7] इति । अत्र **मैत्रेयरक्षित** —''स्वाद आस्वादने' आ एतस्मात् स्वाद सम्भविकमकादेव णिज्भवतीति मन्तव्यम् । असम्भविकर्मकत्वे व्यावृत्ति । आङ स्वाद

---

१ क्षीरस्वामिमैत्रेयरक्षितग्र थयो 'कृ हिंसायाम्' इत्येव पाठ ।

२ कत्रभिप्राये क्रियाफले परस्मपदसिद्धिरूप यद् वृ धातौ पूर्वम् ( पृष्ठ ३८ ) उक्त तदिहापि द्रष्टव्यमित्यथ । ३ क्षीरतरङ्गिणी १।५२६ पृष्ठ १०८ ।

४ क्षीरतरङ्गिणी, १।७४, पृष्ठ २६ । ५ क्षीरतरङ्गिणी, धातुसूत्र १।५५३ ।

६ तत्रापि घटादौ पठितस्यापि इत्यथ । परस्मैपदप्रकरणानुरोधमनादृत्य आत्मनेपदिनोऽनुवादमादृत्यात्मनेपदमेवोदाजहारेत्यथ । ७ क्षीरतरङ्गिण्यां ( पृष्ठ ३०३ ) धातुप्रदीपे ( पृष्ठ १४३ ) च 'आस्वद सकर्मकाद्' इत्येव पाठ उपलभ्यते, न तु आस्वाद सकर्मकात् ।

एव सकर्मकादित्येके''[१] इति । तत्र च सम्भविकर्मकत्वकथनेन सत्यसति वा कर्मण प्रयोगे तत्सम्भवमात्रेण णिज्भवतीत्युक्त भवति । कर्मासम्भव पुनरनेकार्थत्वेनार्थान्तरवाचिताया यथाप्रयोग द्रष्टव्य । **क्षीरस्वामी** त्वाह—'आङ्पूर्वात् स्वादते सकर्मकाण्णिज् भवति । अस्ति कर्म यस्य स सकर्मक[२]। आस्वादधातुर्णिचमुत्पादयति । पय आस्वादयति'[३] इति । **धनपालश्च** 'आस्वादयति क्षीरम्' इत्युदाहरन्न- त्रैवानुकूल । तत्र चाभिविधिपक्ष एव युक्त प्रत्यवभासते, इहाप्याङ पूर्वापरेष्विवाभिविध्यर्थताया एवौचित्यात् । 'आकुस्मादि[४]ति हि पूर्वत्राभिविधावाङ् दृष्ट । 'आधृषाद्वा'[५] इति, 'आगर्वादि ति च समनन्तरमेवैव द्रक्ष्यते । तत्रायमपि तन्मध्यपाती तच्छायश्चाङ् तदर्थ एव व्यक्तमवभासते । तदत्र पक्षान्तर व्याचक्षणानामाशय- श्चिन्त्य । अन्ये तु आस्वद सकर्मकादित्याहु[७]। ग्रस ग्रहणे इत्यारभ्य 'ष्वद आस्वादने' इत्येवमन्ता ये धातव पठ्यन्ते, तथा च 'पूरी आप्यायने ष्वदास्वाद' इति **श्लोकधातुपाठ** । 'सवरणे' इति तु **क्षीरस्वामिधनपालशाकटायना**, ष्वद आस्वादने' इत्यत्र च क्षीरस्वामी—'स्वदते, चुरादौ स्वद सवरणे स्वादयति'[८] इति, तेभ्य एतेभ्य सम्भविकर्मकेभ्य एव णिज् भवतीत्यर्थ । एतच्च सकर्मक- त्वमन्येष्वपि भाषार्थेषून्नेयम् । अत्र चोत्तरत्र च भाषार्थग्रहणे 'भासार्थ इत्येके'[९] इत्यपि द्रष्टव्यम् । तथा च 'पट पुट' इत्यादौ 'वृतु वृधु भाषार्था' इत्यन्ते **दण्डकधातुपाठे मैत्रेयरक्षित** — भासार्था दीप्त्यर्था इत्येके'[१०] इति । **क्षीरस्वामी** च— भासा दीप्तिरर्थो येषा ते

---

१ धातुप्रदीप, पृष्ठ १४३ तत्र पाठभेद ।
२ प्रयुज्यमानकर्मक इत्यथ ।
३ द्र० क्षीरतरङ्गिणी १०।१९३, पृष्ठ ३०३ । तत्र महान् पाठभद ।
४ क्षीरतरङ्गिणी, धातुसूत्र १०।१२३।।
५ क्षीरतरङ्गिणी, धातुसूत्र १०।२०१।।
६ क्षीरतरङ्गिणी, धातुसूत्र १०।२८०।।
७ क्षीरतरङ्गिण्या ( पृष्ठ ३०३ ) धातुप्रदीपे ( पृष्ठ १४३ ) चायमेव पाठ उपलभ्यते, न तु पुरुषकारोक्त पूर्वनिर्दिष्ट 'आस्वाद' इति पाठ ।
८ क्षीरतरङ्गिणी १।१८, पृष्ठ १७ ।
९ धातुप्रदीप, पृष्ठ १४४, पंक्ति २ ।
१० धातुप्रदीप, पृष्ठ १४४, किञ्चित् पाठभेद ।

भासार्था'[1] इति । 'भ्रकुसश्च भ्रुकुसश्च भ्रूकुसश्चेति नर्तक । स्त्रीवेषधारी पुरुष'[2] इत्यत्र **कविकामधेनुकार**श्च **दण्डकधातुपाठमे**-वाश्रित्याह—'कुसिर्भासाथ । स्त्रीरूपधारित्वाद् भ्रुवा कुसयति पुरुषत्वमिति भ्रुकुस' इति । तत्र भासार्थपक्षे सकर्मकत्वे यत्न कर्तव्य । **धनपाल** पुनरन्यथैवामु दण्डक व्याचष्टे—'एते पटादय सर्वे णिचमुत्पादयन्ति । अन्ये च ये भासार्था वातव ते च णिचमुत्पादयन्ति' इति । अत्र चाज्ञसैवानाज्ञस्ये सत्यव्या ( प्तिप्र? ) प्त्यपनोत्याशैव शरणम् ॥

**अङ्क लक्षण इत्यस्य भवेदङ्कयतीति णौ ।**
**इदितस्त्वङ्कते तत्र कुटिलाया गतावकेत् ॥ ४१ ॥**

अकि लक्षणे, तत्रेति लक्षण । 'अक अग कुटिलाया गतौ' ॥

**णिचि बुक्कयतीति स्याद् भाषणे शपि बुक्कति ।**

'बुक्क भाषणे' । 'बुक्कन श्ववृकध्वाने'[3] इति तु **यादवप्रकाश** । 'बुक्क आभाषणे' इति **शाकटायन** । अन्ये तु **क्षीरस्वामी**—'भषण इत्येके । बुक्कति श्वा'[4] इति । मैत्रेयरक्षितश्चैवमेवोदाहार्षीत्[5] ।

**मर्षणे शीकयेच्छीकेत् सेचने शपि शीकते ॥ ४२ ॥**

'शीक आमर्षणे', युजादि । 'शीकृ सेचने', अनुदात्तेत् । एतच्च[6] शीकतीति मन्दैर्मापाठीत्यैवमथमुच्यते[7] । अनुपात्तो त्वात्मनेपदचिह्ने

---

१ क्षीरतरङ्गिण्या ( १०।१६७, पृष्ठ ३०४ ) नाय पाठ उपलभ्यते ।

२ अमरकोश १।६।११॥ ३ वैजयन्ती पृष्ठ ३१ । ४ क्षीरतरङ्गिणी १।८७, पृष्ठ ३२ । ५ धातुप्रदीप, पृष्ठ १७ । ६ 'अनुदात्तेत्' इत्यथ ।

७ अत्राह पूर्वसम्पादको गणपतिशास्त्री—वचनातिरेकेणात्मनेपदावसायेऽभ्युपायाभावादिति शेष । अत एववजातीयके स्थले सर्वत्र 'गत्या तु लङ्घते' ( श्लोक ४५ ) 'पृक्ते सम्पर्के ( श्लोक ५१ ) इत्यादौ अनुदात्तेदिति वक्ष्यते । 'तृप्तौ च चकते शपि, दशने लोकते लोके' ( श्लोक ४० ) 'इदितस्त्वङ्कते तत्र' ( श्लोक ४१ ) 'शङ्कते शकि शकायाम्' ( श्लोक ४३ ) इत्यत्र तु परस्मैपदपाठे वृत्तविरोधसम्भवाद् अभ्युपायाद् आत्मनेपद शक्यवसायमिति 'अनुदात्तेद्' इत्यात्मनेपदचिह्न न कथितम् । न च तज्जातीये वक्ष्यते 'सेचने सचते ( श्लोक ४६ ) इत्यादौ इति ।

परस्मैपदपाठ एव अन्यथापि वृत्ताविरोधिपाठसम्भवेऽपि शुद्धो **बोद्धव्यो** यथा 'बुक्कती'[१] त्यादौ। 'सीक्क इत्यार्या' इत्यपि **धनपाल**। तत्र चाद्य पक्ष शीकर इति प्रयोगानुगुण। योऽपि षोपदेशलक्षणे सीकृपाठ उक्त[२] सोऽप्येवमेव प्रत्युक्त। 'शीकृ गत्यर्थं' इत्यप्येके, तत्स्थाने षेकृ इत्यन्ये। यदाह **क्षीरस्वामी**—शीकृ, सेकृ, स्रेकृ, स्रकि, शकि श्लकि गत्यर्था। शीकेरर्थभेदात् पुन पाठ। अत एव चन्द्रो नैनम-ध्यैष्ट। अन्ये षेकृ इति विकल्पेन षोपदेशकार्यार्थं पेठु'[३] इति॥

**शङ्कते शकि शङ्कायां शक्तौ शक्नोति मर्षणे।**
**शक्यते शक्यतीत्येव शपि श्नौ श्यनि च क्रमात्॥ ४३॥**

'**शक्लृ शक्तौ**'। 'शक विभाषितो मर्षणे'। विभाषित इत्युभयपदी। रूढ चैतत्तन्त्रान्तरेष्वपि। **क्षीरस्वामी** त्वाह—'सहनेऽर्थे शकिधातु-र्विभाषितो विकल्पित, पक्षे दिवादि, पक्षे स्वादिरित्यर्थ। शक्यति शक्नोती'[४]ति। शाकटायनश्चामुमेव विभाषिताथम्, अस्य चोभयत्र पाठमात्रादेव सिद्धत्वाद् वैयर्थ्यं नून मत्वा 'शक मर्षणे' **इत्येव** पपाठ, न पुन 'शकी' इति। ईदित्व ह्युभयपदित्वचिह्न तन्मते[५]। तच्चैत-दुभयमपि बहुसम्मते यथोक्तेऽर्थे सम्भवतीत्ययुक्तमेव॥

**तकेत् तङ्क्देचथासङ्ख्य हसने कृच्छ्रजीवने॥ ४३½॥**

'सहने' इत्यपर पाठ। तक सहने। **क्षीरस्वामी** पुन 'सहने' इत्युक्त्वा 'हसन इति दुर्ग'[६] इति। यत्तु **श्लोकधातुपाठे** 'फक्क नीचै-र्गतौ तक्क मर्षणे, बुक्क भाषणे' इति द्विककारस्तकि पठ्यते, तद्

१ द्र० दैवश्लोक ४२ (पूर्वार्ध)। २ द्रष्टव्य पूर्वम् (पृष्ठ १४)। भागवृ-त्तौ स पाठ। ३ क्षीरतरङ्गिणी १।६७, पृष्ठ २८।
४ नाय पाठ क्षीरतरङ्गिण्या ४।७८ इत्यत्रोपलभ्यते। ५ द्र० ओदिदपव-दानुपसर्गज्ञ (जैन शाक० १।४।६६)। 'जित ईदित। अपपूर्वस्य वदेरनुपसर्गस्य च जानातेर्धातोर्लस्य फलेशे कर्तरि तङो भवति इति तस्य लघुवृत्ति।
६ क्षीरतरङ्गिण्या (१।८४, पृष्ठ ३२) त्व यथा पाठ—'तक हसने। सहन इति दुर्ग'।

'अचो यत्' ( अष्टा० ३।१।९७ ) इत्यत्रत्येन 'तकिशसियतिजनीना-मुपसख्यानम्' इति भाष्येण विरुद्धयते[१] । 'तकि कृच्छ्रजीवने' ।

**अन्वेषणेऽर्थे मृगयेत णौ यो,**
**मार्गे भवेन्मार्गति मागयेच्च ।**

'मृग अन्वेषणे', कथादित्वाददन्त । ततश्चातो लोपस्य 'अच परस्मिन् पूर्वविधौ' ( अष्टा० १।१।५७ ) इति स्थानिवद्भावा-ल्लघूपधगुणाभाव । पदादित्वात् तङ् । यदाहु—'आगर्वादात्मनेपदी'[२] इति । पद गतौ इत्याद्या गर्व माने इत्यन्ता ये धातव कथादिषु पठचन्ते, त आत्मनेपदिन इत्यर्थ । अत्र **मैत्रेयरक्षित** —'मृग्यतीति कण्ड्वादिपाठात् केचिन्मन्यन्ते'[३] इति । 'मार्ग अन्वेषणे' ।

**लिङ्गेर्गतौ लिङ्गति लिङ्गयेद्,**
**इत्यस्यैव चित्रीकरणार्थवृत्ते ।। ४४½ ।।**

लिङ्गिर्गत्यर्थ । 'लिगि चित्रीकरणे' ।।

**भाषणे लङ्घयेच्छोषे लङ्घेद् गत्या तु लङ्घते ।। ४५ ।।**

लघिर्भाषार्थ । लघि शोषणे' । लघिर्गत्यर्थ ', अनुदात्तेत् । 'लघि भोजननिवृत्तौ चे'त्येके । तथा च **क्षीरस्वामी**–'लघिर्भोजन-निवृत्तौ च गत्यर्थश्च । नवज्वरे लङ्घनीय [४] इति ।।

**सेचने सचते तच्च समवाये सचत्यपि ।**

'षच सेचने' । सेवने तु सचिरुक्तो निरुक्ते—'सिषक्तु सचत इति सेवमानस्य'[५] इति । अस्यैतौ वाचिकावित्यर्थ । षच समवाये । तच्चेति सचते च । कचित्तु पठयते—

---

१ द्विककारपाठे ण्यत्यपि वृद्धेरभावात् यतो विधान नोचित स्यात्, अतो ज्ञायते भाष्यमते न द्विककारस्तकधातुः । २ क्षीरतरङ्गिणी, धातुसूत्र १०।२८० । ३ धातुप्रदीप, पृष्ठ १५०, किञ्चित्पाठभेदेन । मद्रासीये हस्तलेखे 'दिवादिपाठात्' इति पाठ । द्र० तत्रव टि० ४२ । सायण-दीक्षितादयोऽपि दिवादिपाठात् मृग्यतीत्याहुः । ४ क्षीरतरङ्गिणी १।७६ किञ्चित्पाठभेदेन । ५ निरुक्त ३।२१।

**सेचने समवाये च सचते सचति क्रमात् ।**

इति । तथा च 'अकथित च' ( अष्टा० १।४।५१ ) इत्यत्र **हरदत्त** —"केचित्तु परस्मैपदिभि सह धातुमेन पठन्ति । षच समवाये, रप लप व्यक्तायां वाचि[1] इति । तदेतत् 'ब्रुविशासिगुणेन च यत् सचते'[2] इति **भाष्यौचित्यादयुक्तम्** । सचत इति सम्बध्यत इत्यथ, समवयतीति **यावत्** । एव च 'षच सेचने' इत्यस्यानुदात्ते-तोऽनेकार्थत्वात् समवाये वृत्ति'[3] इति **हरदत्तोक्त** प्रौढिवादमात्रम् । **न्यासे** च सचते इत्यस्य 'षच **समवाये**' इत्येव धातुरुक्त । एव च परस्मैपदिषु 'षप समवाये' इति पान्तस्यैव पाठ । पान्तकाण्ड चैव-मस्नुत भवति । एवमेव च **मैत्रेयरक्षित शाकटायनश्च** । **क्षीरस्वामी** तु सप्त सप्तिरिति चोदाहृत्य सचेति **चन्द्र**, सचति सचिव'[4] इत्याह ।।

**णौ लोचयति भाषार्थे दर्शने ऽपि लोचते ।। ४६ ।।**

'लोचृ भाषार्थ' । 'लोचृ दर्शने', अनुदात्तेत् ।।

**कल्कने मुञ्चते मुञ्चेर्मोक्षे मुञ्चति मुञ्चते ।**
**प्रमोचने चुरादेर्णौ मोचयत्येष न त्वलृदित् ।। ४७ ।।**

'मच मुचि कल्कने' । 'कल्कन दम्भ शाठ्य च' इति **मैत्रेय-रक्षित**[5] । 'कल्कन दम्भ, कथन च । मच मुचेति **चन्द्र** । मोचते । मुञ्चते' इति **क्षीरस्वामी**[6] ।'मच मचीं'त्येके । तथा च 'मचि कल्कने मचुङ् धारणोच्छ्रायपूजनेषु' इति **शाकटायन** । तेन ह्यनुदात्तेत्-स्थाने तु इदित्,[7] तत्स्थाने चोदित्[8] क्रियते । **धनपालश्चात्रैवानुकूल** ।

---

१ पदमञ्जरी, भाग १, पृष्ठ ३०५ । २ महा० १।४।५१।।
३ पदमञ्जरी, भाग १, पृष्ठ ३०५ । ४ क्षीरतरङ्गिणी १।२८५, पृष्ठ ६४ ।
५ धातुप्रदीप, पृष्ठ २० । ६ क्षीरतरङ्गिणी १।१०५, पृष्ठ ३५ ।
७ द्र० जैनशाकटायनसूत्रम्—'ताताझथासाथाध्वमिल्वहिमहिड डिदिच्छीयस-क्ष्णवपस्कृनिविश' । १।४।२।। 'डकारेत इकारेतश्च धातो शीयादेशशदादे-शाद् त आताम् झ आदेशा भवन्तीति तदथ ।
८ शाकटायन पाणिनीयस्येकारानुबन्धस्यस्थान उकारमनुबध्नाति । तद्यथा-उदित । ४।२।१९७ ।। उदितो धातोर्नुम् भवतीति तदथ ।

'मुच्लृ मोक्षणे' तुदादि । 'शे मुचादीनाम्' ( अष्टा० ७।१।५९ ) इति नुम् । 'मुच प्रमोचने' । **एष नत्वलृदिदिति** । पूर्वं एव लृदित्, न त्वयमिति पाठशुद्धचर्थमेतत् । तत्र चामुचदिति तु लृदित्त्वफलम् । 'पुषाद्युताद्यलृदित परस्मैपदेषु ( अष्टा० ३।१।५५ ) इति च्लेरङ् ।।

**णौ पञ्चयति विस्तारे व्यक्तौ तु शपि पञ्चते ।**

'पचि विस्तारवचने' । प्रपञ्चयति । विस्तार इत्येवैके । तथा च **श्लोकधातुपाठ**—'जुड प्रेरणवाची शुठालस्ये गज मार्जं च । शब्दार्थे पचि विस्तारे' इति । तथैव **चन्द्र**—पचि व्यक्तीकरणे । पचेति **दुर्ग**, अनुदात्तेत् ।।

**वञ्चतीति गतावर्थे बञ्चयेत प्रलम्भने ।। ४८ ।।**

'वञ्चु गत्यर्थं', 'वञ्चु प्रलम्भने' चितादि [1] ।।

**पूजाया णौ विभाषार्चेरचयत्यचतेऽर्चति ।**

**भूवादौ पाठसामर्थ्यात्कर्तृगामिफलेऽर्चति ।। ४९ ।।**

'अर्च पूजाया' युजादि स्वरितेत् । ततश्चाचति इत्यपि तेनैव सिद्धेऽर्चेर्भूवादिपाठ कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थं । **शाकटायनस्य** त्वात्मनेपदी ।।

**गतियाचनयोरञ्चत्यञ्चते णौ विशेषणे ।**

**अञ्चयत्यञ्चतीत्येक गतिपूजनयोरपि ।। ५० ।।**

अत्र त्रिभिस्त्रिभि पञ्चभिश्च पदै क्रमाद् वाक्यत्रय बालाना योजनीयम् । 'अञ्चु गतौ याचने च । अचु इत्येके'[2] इति **मैत्रेयरक्षित** [3] । अचूञ् व्ययोगतो इति **शाकटायन** । तेन चोदित्स्थाने ऊदित् क्रियते[4] । अचि गताविति अञ्चु गताविति च द्वौ धातू

---

१ 'आकुस्मीय ' इत्यर्थ । २ अत एव 'य पूर्णादुदचति इति तत्तिरीय-सहिताया ( ७।५।६ ) प्रयुज्यते । ३ धातुप्रदीप १।८६५, पृष्ठ ६३ । 'अचु' पाठान्तर क्षीरतरङ्गिण्याम् ( १।६०५, पृष्ठ १२३ ) अपि निर्दिश्यते ।

४ तथा च शाकटायनीय सूत्रम्-त्व्यूदित (४।२।१६१) । ऊदितो धातो क्त्वायाम् इड् वा स्यादिति तदथ ।

**क्षीरस्वामी**[१] । तत्र चेदित्त्वफलमञ्च्यते इत्यादौ 'अनिदिता हल उपधाया क्ङिति' ( अष्टा० ६।४।२४ ) इति नलोपाभाव । 'अञ्चु विशेषणे', 'अञ्चु गतिपूजनयो ' ॥

**वक्तीति भाषणे वा णौ वाचयेद् वचतीति वा ।**

'वच भाषणे', अदादिर्युजादिश्च । तत्र चान्त्य **पारायणिकैर्ना**-धीयते इति **क्षीरस्वामी**[२] । अन्य पुन 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( अष्टा० ३।१।५२ ) इत्यत्र वृत्तौ[३] परिभाषणे पठ्यते । तथापि परेरनधिकार्थत्वाद्[४] भाषणमेवाथ ॥

**पृणक्ति पृक्ते सम्पर्के यौ पर्चयति पर्चति ॥ ५१ ॥**

पृङ्क्त इत्यपर पाठ । 'पृची सम्पर्के' रुधादिरदादिश्च । अन्त्योऽनुदात्तेत् । अत्र 'भूवादि' सूत्रे[५] **सुधाकर** — पृचि इति **द्रमिडा**, वेति **नन्दिस्वामी**' इति । **धनपालश्च** सर्व नन्दिस्वामिवदेवास्थित । 'पुच पृच सयमने' । 'सम्बन्धन इति **क्षीरस्वामी**[६] ॥

**रिचिर् विरेचने रिक्त्ङे रिणक्ति श्ने वियोजने ।**
**सम्पर्चने च यौ वा णौ रेचयत्यपि रेचति ॥ ५२ ॥**

**श्ने** श्नमि रिच वियोजनसम्पर्चनयो ॥

**शुच्यते शुच्यतीत्येव पूतीभावे शुचे श्यनि ।**
**शोके शोचति**

'ईशुचिर् पूतिभावे' । 'शुच शोके' ।

**हिसाया तर्जने परिभाषणे ॥ ५३ ॥**

**चर्चत्यध्ययने त्वर्थे भवेच्चर्चयतीति णौ ।**

---

१ द्र० क्षीरतरङ्गिणी १।६०५, पृष्ठ १२३ ।
२ द्र० क्षीरतरङ्गिणी २।५८, पृष्ठ १८२ ।
३ काशिकावृत्ताविति शेष ।
४ उक्त हि परेरानर्थक्यम् 'अधिपरी अनर्थकौ ( अष्टा० १।४।९३ ) सूत्रे ।
५ अष्टा० १।३।१॥
६ क्षीरतरङ्गिण्या तु 'सम्पचने' इति पाठ । द्र० १०।२०२, पृष्ठ ३०५ ।

'चर्च परिभाषणहिंसातजनेषु' । अत्र[1] धातुवृत्तिकारा प्रत्येकमव्यवस्थितपाठशता दृश्यन्ते । यदत्र सत्य तद्देवा ज्ञातुमर्हन्ति इत्यप्याहु[2] । तत्र च प्राचुर्यात् 'चर्च परिभाषणे' इति नून पक्षमाश्रित्य देव प्रववृते । चर्च अध्ययने । कचित्तु पठचते—

**अध्ययने चर्चयेच्चर्चतीति तु ।**
**हिंसाया तर्जने शे तु तथैव परिभाषणे ॥**

इति । तत्र 'चर्च हिंसातर्जनयो', 'चच परिभाषणे' इति नून पाठौ । परिभाषणसन्तर्जनयोरिति चान्त्य बहव पठन्ति । सर्वथाऽपि 'स्वरभेदाद् द्विरुच्यते'[3] इति शतुर्वा नु शे स्यादिति तुदादिता'[4] इति च वक्ष्यमाणनीत्या फलभेदो द्रष्टव्य ॥

**सकोचे कुचतीति स्यात् कोचेत् सवर्चनादिषु ॥ ५४ ॥**

'कुच सकोचे', तुदादि । 'कुच सवचनकौटिल्यप्रतिष्टम्भविलेखनेषु' ज्वलादि । तत्फल पुन इगुपधज्ञाप्रीकिर क (अष्टा० ३।१।१३५) इति प्राप्ते 'ज्वलितिकसन्तेभ्यो ण' (अष्टा० ३।१।१४०) इति पक्षे ण,–'कोच कुच' इति । यस्तु 'कुच शब्देतारे' इति ज्वलादिभ्योऽन्यत्र पठचते, तस्य कोचेत् कुच इति द्रष्टव्यम् । तत्र ज्वलादिषु पाठादेवानयोरपि रूपयो सिद्धत्वेऽपि कुच एवात्रार्थे यथा स्यात्, न तु कोचोऽपि इत्येवमर्थं पृथक् पठचते । न पुन 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनताशब्देष्वि'ति एकीकृत्यैव ॥

**वियोजनेऽर्चयेदर्चेद् यौ स्तुतावृचतीत्यृचे ।**

ऋचेर्युजादौ मृग्य पाठ । रिच वियोजने इति प्रागुक्त[5] एव हि पाठो दृश्यते[6] । 'ऋच स्तुतौ' तुदादि ॥

---

१ धातुस्वरूप विषय इत्यथ। । २ तथा चात्र क्षीरस्वामी—'जर्स इति च द्रद्गौ । चच इत्येके, जर्ज इत्यये, झच इत्यपरे । किमत्र सत्यम् ? देवा ज्ञास्यति ।' क्षीरतरङ्गिणी १।४७२, पृष्ठ ९८ । ३ दैवश्लोक ५५ ।
४ दवश्लोक ५७ । ५ दैवश्लोके द्वापञ्चाशत् पद्य उक्त ।
६ युजादौ 'रिच' एव पठचते, न तु 'ऋच' इति । तथापि दैवपाठानुरोधात् युजादौ 'ऋच' धातोरपि पाठो द्रष्टव्य ।

**शशपोरुञ्छतीत्युञ्छे स्वरभेदाद् द्विरुच्यते ॥ ५५ ॥**

**उच्छतीति विवासे स्यादिदितोऽनिदितस्तयो ।**

'उछि उञ्छे'। 'उञ्छो धान्यश आदान कणिशाद्याजन शिलम्' इति **यादवप्रकाश**[1]। श्लोकेऽपि **विवास** इतिवद् उञ्छे इति सप्तम्येव, न पुनरुञ्छेरिति षष्ठी। विसजनीयकल्पना गौरव चैव परिहृतम्। यद्येवमुञ्छति इत्येव शशपो रूप, तत स्वत प्राप्ते भूवादावेवाय पठ्यताम्। अथापि 'शतुर्वा नु शे स्यादिति तुदादिता' इति वक्ष्यमाणनीत्योञ्छन्ती उञ्छतीति नुम्विकल्पार्थ तुदादौ पठ्येत, तथापि न भूवादौ। तदेव रूपाभेदात् कुतोऽय द्विष्पठ्यते इत्यत उक्त **स्वरभेदाद्** इति। उञ्छतीत्यापाततो रूपाभेदेऽपि सूक्ष्मेक्षिकाया मध्योदात्ताद्युदात्तत्वाभ्या[2] रूपभेदोऽप्यस्त्येवेत्यथ। अत्र हि 'अनुदात्तौ सुप्पितौ' (अष्टा० ३।१।४) इत्यनुदात्तस्तिप्शपोरच् इति। 'धातो' (६।१।१६२) इत्युदात्त उकार 'उदात्तानुदात्तस्य स्वरित' (अष्टा० ८।४।६६) इति स्वरित शप्। 'स्वरितात्सहितायामनुदात्तानाम्' (अष्टा० १।२।३९) इत्येकश्रुतिरिकार। स एव च प्रचय इत्युच्यते। एव शप्याद्युदात्त पदम्। शे पुन आद्युदात्तश्च (अष्टा० ३।१।३) इत्युदात्ते सति मध्योदात्तम्। तथा च 'अनुदात्त पदमेकवजम्' (अष्टा० ६।१।१५८) इत्यनुदात्त उकार। स च 'उदात्तस्वरितपरस्य सन्नतर' (अष्टा० १।२।४०) इत्यनुदात्ततर। तिपश्चानुदात्तस्वरितौ पूर्ववत्। 'उछी विवासे' इतीदित्त्वेनेदित्त्वाभावान्नुमभावेन **तयो** शशपोरुच्छतीति स्यात्। विपूर्वश्चाय प्राय प्रयुज्यते। ततो रजन्या व्युष्टायाम्[3] 'व्युच्छन्ती दुहिता दिव[4] 'उषा उच्छदपस्रिध'[5] इति ॥

---

१. वैजयन्ती पृष्ठ १२३।

२ भूवादिपाठादाद्युदात्तता, तुदादित्वाच्च मध्योदात्तता द्रष्टव्या।

३ रामा० उत्तर० ४६।१।३॥

४ तै० ब्रा० ३।१॥

५ ऋ० १।४८।८॥

**णौ विच्छयति भाषार्थे गतौ विच्छायतीति शे ॥५६॥**

**विच्छेराये शतुर्वा नुं शे स्यादिति तुदादिता ।**

'विच्छ भाषार्थे', 'विछ गतौ'। 'छे च (अष्टा० ६।१।७३) इति तुक्सिद्धे विच्छेत्यपपाठ । तत्र चान्त्याद् गुपूधूपविच्छिपणिपनिभ्य आय' (अष्टा० ३।१।२८) इत्याये शे[१] च सति विच्छायतीति भवति। अथास्य तुदादिपाठ किमर्थं ? न तावत् स्वरार्थं, एकादेश उदात्तेनोदात्तः (अष्टा० ८।२।५) इत्यनुदात्तस्य शशपोर्विशेषाभावात्। इह हि शे उदात्ते पूर्ववद् धात्वकारोऽनुदात्त । शपि त्वनुदात्तऽसावुदात्त इत्येव सत्यपि विशेषे तयोरेकादेश उदात्त एव इत्यन आह—**शतुर्वा नु शे स्यादिति तुदादिता**। शे हि सति विच्छायती विच्छायन्तीत्यत्र 'आच्छीनद्योर्नुम्' (अष्टा० ७।१।८०) इति नु विकल्प्यते। शपि तु 'शप्श्यनोर्नित्यम्' (अष्टा० ७।१।८१) इति नित्य स्यात्।

**अत्र केचित्** तुदादिपाठबलाद् 'विच्छती त्यपि रूपमिच्छन्ति। 'तुदादिभ्य श' (अष्टा० ३।१।७७) इति विच्छे शो विधीयते, न तु विच्छाये, विच्छेरेव तुदादिषु पाठात्। तच्चतद् विच्छे शविधानम् 'आये' नित्ये सत्यायान्ताद् भवत् परिक्लिश्येत। एव च 'आयादय आर्धधातुके वा' (अष्टा० ३।१।३१) इत्यत्र 'शपि नित्यम्'[२] इति **भाष्ये** शब्ग्रहण विच्छे शेऽप्यायस्य विकल्पे सति आञ्जस्येनावकल्पेत। न पुन शिद्विकरणोपलक्षणतया कथञ्चिन्नीयेत[३]। तथा च **सुधाकर** —'विच्छे-स्तुदादिषु पाठो ज्ञापकः सार्वधातुकेऽप्यायप्रत्ययोऽनित्य इति। तेन वच्छ-तीति सिद्धम्' इति। च्छ्वो शूडनुनासिके च' (अष्टा० ६।४।१९) इत्यत्र **न्यासकारश्च**—'गा विच्छतीति गोविड्' इति। यन्नुविकल्प फलमि-

१ आयप्रत्ययान्तस्य धात्वन्तरत्वाद् तुदादित्वाभावात् शो न भवति, शबेव भवति, इति चिन्त्यो पुरुषक रग्रन्थ । २ 'आयादय शपि नित्यम्' इति प्राचीन किञ्चित् सूत्र निदिशति भाष्यकारस्तस्यैकदेशनिर्देशेन ।

३ कैयटेन त्वत्र 'न्यासभेदोपलक्षणार्थम् इति 'शिति नित्यम्' इति तु यास कतव्य' इत्येव नीयते ।

त्युक्त, तुदादिपाठात्तदपि सम्भवतीति तुदादिपाठस्येदमेवफल न्याय्यम् । एव च नुविकल्पाद् विच्छन्ती विच्छनीत्येव युक्तम् । विच्छायती ( ?, न्ती ) त्यौत्सर्गिक शबेवेति नित्यो नुम् ।

**रजते रजतीत्येव रज्यते रज्यतीत्यपि ॥५७।**
**रागार्थे शप्श्यनोर्द्वे द्वे**

'रञ्ज रागे' । 'दशसञ्जस्वञ्जा शपि, रञ्जेश्च' ( अष्टा० ६।४।२५, २६ ) इति 'अनिदिताम्' ( अष्टा० ६।४।२४ ) इति न लोप[१] ॥

**गतौ वजति वाजयेत् ।**

वज व्रज गतौ वज मागसस्कारगत्यो । मागरण इति **धनपाल** । 'वज मार्ग इति द्वौ धातू इत्यन्ये' इति **क्षीरस्वामी**[२] । 'व्रजे ति **चन्द्र** । 'व्रज मार्गसस्कारे'[३] इति **दुर्ग** । उभयोरप्यनयोवजव्रजपक्षयोर्मागण-[४] सस्कार इत्येवाथस्तन्त्रान्तरे पठयते ।

**दीप्तौ शप्येजते तत्र भवेदेजति कम्पने ॥५८॥**

'एजृ भ्रेजृ भ्राजृ दीप्तौ' 'एजृ कम्पने' ॥

**वृणक्ति वर्जने वृङ्क्ते यौ वर्जयति वजति ।**

'वृजी वजने' रुधादिर्युजादिश्च । तत्र चाद्ये वरण इति **धनपाल-शाकटायनौ** । वृजि वजने, अदादिरनुदात्तेत् । ईदित् पाठे तु नुमभावाद् "वृक्ते" इति पाठ । तथा च **क्षीरस्वामी**—'वृजि इति पठित्वा वृजी इति दौर्गा । वृक्ते वर्जिता वृक्त'[५] इत्याह । तत्र चान्त्ये

---

१ भौवादिके 'रञ्जेश्च' इति सूत्रेण, दैवादिके 'अनिदिताम्' इत्यनेनेति भाव ।

२ क्षीरतरङ्गिणी १०।६६, पृष्ठ २८७ ।　३ क्षीरतरङ्गिण्या 'व्रज मागण-सस्कारे इति दुग ' इति पाठ ।　४ 'मागसस्कारे' इति गणपतिशम सशोधित पाठ । अस्मन्मते तु यथापठित 'मागणसस्कारे' इत्येव शुद्ध पाठ । द्रष्टव्या इत पूर्वा टिप्पणी ३ ।　५ क्षीरतरङ्गिणी १।२०, पृष्ठ १७० । यत्त्वत्र पुरुषकारेण 'क्षीरस्वामी वृजि इति पठित्वा' इत्युक्त तन्नोपलभ्यते क्षीरतरङ्गिण्याम् । तत्र तु वृजि स्थाने 'शिजि अव्यक्ते शब्दे' इति पठयते ( द्र० पृष्ठ १७० ) ।

'श्वीदितो निष्ठायाम्' (अष्टा० ७।२।१४) इतीडभाव । **शाकटायनस्य** त्वय सम्पचने । यदाह—'विजुङ् वृजुङ् वृजैङ् सम्पचने' इति । तेन च ईदित्स्थाने ऐदित् क्रियते[1] ॥

## गर्जेद् गृञ्जेद् गजेद् गञ्जेच्छब्दने गाजयेण्णिचि ॥ ५६ ॥

'गज गजि गृज गृजि मुज मुजि शब्दार्था' । 'मज मुजीति' **क्षीरस्वामी**[2] **च द्रश्च** । 'मृज मृजीत्यप्याहु'[3] रिति च । गज मदने च । शब्देऽस्य पाठो मदने प्रयोगाप्राचुर्यार्थो नूनम्[4] । यदाह–'अघि मघि लघि गत्याक्षेपे । मघि कैतवे च' इत्यत्र **मैत्रेयरक्षित** – पूवमस्य पाठ कैतवाथस्यान्वाचितत्वद्योतनाय[5] इति । व्यभिचरति चैतद् 'वृषु पृषु मृषु सेचने, मृषु सहने च'[6] इत्यादौ । गज शब्दाथ[7] अत्र[8] च गजतीत्येतद् गज शब्दे इत्यस्यापि काम द्रष्टव्यम् ॥

---

१ शाकटायनो निष्ठायामिड्वारणाय 'ऐत्' अनुब ध स्वीचकार । तथाहि 'न डीय श्व्यदिद्वे टोऽपत ' ( ४।२।१४३ ) इति तदीय सूत्रम् ।

२ क्षीरतरङ्गिणी १।१५६।। मुद्रिते चान्द्रधातुपाठे तु 'मुज मुजि' इति पाठ उपलभ्यते ( धा० सू० १।८० )। सायणो धातुवृत्तौ स्वामिच द्रयोमते 'मृज मृजि' इति पाठ प्रदर्शितवान् ( पृष्ठ ७३ ) ।

३ क्षीरतरङ्गिण्या तु 'मुज मृजीत्यप्याहु इति पाठ उपलभ्यते ( द्र० १।१५६, पृष्ठ ४६ ) । ४ 'गज मदने च इत्यत्रान्वाचयार्थेन चेन शब्दे पठितस्य मदनेऽप्राचुर्यं द्योत्यत इति भाव । ५ धातुप्रदीप १।१०७ १०६, पृष्ठ १६, १७।। ६ क्षीरतरङ्गिणी धातुसूत्र १।४६४, ४६५।। अत्र पूर्वन्यायेन मृषधातो सहनेऽप्राचुय स्यात् पर तु सहन एवास्य प्राचुर्येण प्रयोग, सेचने तु क्वाचित्क । अत उक्तम्—व्यभिचरति चतत् । अत्र सप्तदशोत्तर-पृष्ठस्थ एतदथक पुरुषकारपाठस्तृतीया टिप्पणी च द्रष्टव्या ।

७ गज मच माज शब्दार्था इत्येव चुरादौ पठित ( क्षीरतरङ्गिणी १०।६७ ) ।

८ अत्र चुरादावित्यथ । चुरादौ 'गद शब्दे गज इत्येके इति क्षीरस्वामी ( क्षीर० १०।१११ ) पठति । तस्य गजयतीति रूपमप्यत्र द्रष्टव्यमिति भाव । अत्र पुरुषकारे 'गजति' इति पाठभ्रंश स्यात्, चौरादिकस्य 'गजयति' इति प्रयोगात् ।

**धर्जेद् धृञ्जेद् ध्रजेद् ध्रञ्जेद् ध्वजेद् ध्वञ्जेद् गतौ शपि ।**

'ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ ।।'

**शौचालङ्कारयोर्वा णौ मृजेर्माजति मार्जयेत् ।।६०।।**

**मार्ष्टि शुद्धौ तथा मार्जे शब्दार्थाद्[1] माजयेण्णिचि ।**

'मृजू शौचालङ्कारयो ।' 'मृजूष्' इति क्षीरस्वामी, 'षकारोऽङथ '[2] इति च । तच्चिन्त्यम्, मृजेति भिदादिपाठात्सिद्धे । मृजेर्वृद्धि (अष्टा० ७।२।११४) इति वृद्धि । मृजू शुद्धौ अदादि । मार्ज शब्दार्थ । तथा गज गजीत्यत्र क्षीरस्वामी 'मृज मृजि इत्यप्याह,[3] माजति मृञ्जतीति ।।

**वेवेक्तीति पृथग्भावे विविक्ते च भये पुन ।।६१।।**
**विनक्ति विजते**

'विजिर् पृथग्भावे', जुहोत्यादि । निजा त्रयाणा गुण श्लौ (अष्टा०७।४।७५) इत्यभ्यासस्य गुण । 'ओविजी भयचलनयो,' रुधादिस्तुदादिश्च ।।

**सर्गे सृज्यते सृजतीति च ।**

'सृज विसर्गे,' दिवादिस्तुदादिश्च । लोके त्वनुपसृष्ट सृजि सृष्टौ प्रसिद्ध, कषतिरिवाकषणे[4] इत्यतो 'विसर्गे' इति नोक्तम् कर्षत्याकर्षणे' इत्यत्रैव विलेखन इति ।

**ऋञ्जते भर्जने गत्याद्यर्थे स्यादजते त्वृजे ।।६२।।**

---

१ 'माज शब्दार्थे इति पाठान्तरम् । २ 'षकारोऽङथ ' इति नोपलभ्यते क्षीरतरङ्गिण्याम् ( १०।२३७ ) । अदादौ च मृजूष् इति पठन्नपि 'भिदादित्वान्मृजा' इत्याह क्षीरस्वामी ( क्षीर० २।६१, पृष्ठ १८४ ) ।

३ द्र० पूव ५१ पृष्ठस्था टिप्पणी ३ । ४ अय भाव —यथा आङ्रहितोऽपि 'कषतिर्' आकषणाथ एव, एवमनुपसृष्टोऽपि सृजि सग प्रसिद्ध । अत एव च 'कषतीत्याकषणे इत्युत्तरश्लोके ( १७८ ) कषतेराकषणाथ एव प्रसिद्धत्वात् धातुपाठोक्तो विलेखनरूपोऽर्थो दैवेन न निर्दशित ।

'ऋजि भृजी भजने'। 'ऋज गतिस्थानार्जनोपार्जनेषु' इति **मैत्रेयरक्षित**[1] । ऊर्जनेष्विति **क्षीरस्वामि**[2]**शाकटायनधनपालाः** । अनुदात्तेत् ॥

**प्रतियत्नेऽर्जयेदर्जेरजतीत्यजने पदम् ।**

'अर्ज प्रतियत्ने ।' अत्र उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु' (अष्टा० ६।१।१३९) इत्यत्र **वामन**—'सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्न' इति । अत्र चान्तरोक्त्या प्रागेव गुणे सति पुनराधानं किमर्थमित्यत **उक्तम्** 'आधिक्याय' इति । अधिकस्येत्युक्तौ च गुणान्तराधानेनैवाधिक्य भायादित्यन्यकृतमप्याधिक्यं संगृहीतं वृद्धस्ये'ति । अर्थान्तरे त्वयमर्जि प्रसिद्ध—'द्रव्यमर्जयन् ब्राह्मण प्रतिग्रहणीयात्'[3] इति । 'अज षज अजने' ॥

**निङ्क्ते नेनेक्ति नेनिक्ते शौचेऽर्थे पोषणे तथा ॥६३॥**

'णिजिर् शौचपोषणयो,' रुधादिर्जुहोत्यादिश्च ।

**युनक्ति युङ्क्ते योगार्थे समाधौ युज्येत श्यनि ।**
**युजे संयमनार्थे वा णौ योजयति योजति ॥६४॥**

'युजिर् योगे ।' 'युज समाधौ' अनुदात्तेत् । 'युज पृच संयमने ॥'

**भुजेद् भुनक्ति भुङ्क्ते स्यु कौटिल्ये पालनेऽदने ॥६४½॥**
**[ क्रमेण प्रतियत्नेऽर्जेरर्जयेदर्जनेऽर्जति । ]**

'भुजो कौटिल्ये', 'भुज पालनाभ्यवहारयो', तुदादी रुधादिश्च । 'भुजोऽनवने' (अष्टा० १।३।६६) इति तङ् । ये तु प्रागेव[4] **'प्रतियत्नेऽर्जयेद्'** इत्याद्यपाठिषु, तेऽत्र **'क्रमेण'** इत्यादि न पठन्त्यर्थाभेदात् ॥

---

१ धातुप्रदीप १।१७३, पृष्ठ २०।     २ द्र० क्षीरतरङ्गिणी १।१०९।
३ अनुपलब्धमूलमिति ।     ४ त्रिषष्टितमस्य श्लोकस्य पूर्वार्धे ।

**सेवाया भजते भजेदिति भजेर्विश्राणने भाजयेद्,**
**आमर्दे तु भनक्ति भाजयति णौ भाजे पृथक्कर्मणि ॥**
**भाषार्थे णिचि भञ्जयेद्**

'भज सेवायाम्', भज विश्राणने', भञ्जो आमदने', नोपधोऽयम्, चुत्वेन ञकार । तेन 'श्नान्नलोप' (अष्टा० ६।४।२३) इति नलोप 'पूवत्रासिद्धम्' (अष्टा० ८।२।१) इति चुत्वस्य तत्रासिद्धत्वात् । 'भाज पृथक्कर्मणि तच्च पृथक्करणम् । भजि भाषार्थे'[१] ॥

**अभिहिते त्वर्थे पद तुञ्जयेद्,**
**हिसाया शपि तुञ्जतीत्यनिदितस्तस्या तुजेस्तोजति ॥६५½॥**

'तुजि भाषार्थे' । अभिहितोऽर्थो भाषायामित्युक्तोऽथ । वक्ष्यमाणापेक्षया विशेषद्योतकस्तु, पादपूरणार्थो वा । 'तुज तुजि हिंसायाम्', 'तुजि पालने च' ॥

**सन्तर्जने तर्जयते भर्त्सनार्थे तु तर्जति ॥६६॥**

'तर्ज भत्स सन्तजने' चितादि[२] । 'तज भत्सने' । अर्थैक्येऽपि धातुपाठवशात् पृथक्कथनम् ॥

**वर्णे पिङ्क्ते भवेत् पिञ्जेर्भाषार्थे पिञ्जयेदिति ।**

'पिजि वर्णे', अदादिरनुदात्तेत् । 'पृजिरित्येके' इति **मैत्रेयरक्षित**[३] । 'पिजुङ् सम्पचने' इति **शाकटायन** । 'पिजि भाषार्थे' । 'तुजि पिजि हिसाबलादाननिकेतनेषु' इत्यर्थान्तरेऽपि चौरादिकौ तुजिपिजी स्त ॥

**गुञ्जेदव्यक्तशब्दे स्याच्छब्दमात्रे गुजेदिति ॥ ६७ ॥**

'गुजि अव्यक्तशब्दे' । गुज इत्यपरे । तथा च **क्षीरस्वामी**—'अनिदित्येके'[४] इति । **सुधाकरश्च** 'भूवादि' ( अष्टा० १।३।१ ) सूत्रे 'अनिदित् **पारायणेष्व**पाठि गोजति जुगोजेत्युदाहृते । पक्षे

---

१ 'अय 'पट पुट भाषार्था इति दण्डके पठित । द्र० धातुप्रदीप पृष्ठ १४३ । एवमुत्तरत्र पठितौ 'तुजि भाषाथ 'पिजि भाषाथ' इत्यपि धातू अस्मि नेव दण्डके द्रष्टव्यौ । २. 'चितादौ' पाठान्तरम् ।
३ धातुप्रदीप २।१८, १६, पृष्ठ ७६ । ४ क्षीरतरङ्गिणी १।१२३, पृष्ठ ४१ ।

पुनरिदिदेव गीत ' इति । **शाकटायन** पुन गुज गुजीति पठन् पक्ष-द्वयमपि परिजग्राह । 'गुज शब्दे' तुदादि ॥

**भृज्जते भृज्जति भ्रस्जेर्भर्जने भर्जते भृजे ।**

'भ्रस्ज पाके' । 'ऋजि भृजी भजने' ॥

**प्रकाशे लजयेद् व्रीळे लज्जते लजते पदे ॥६८॥**
**लज्जे ल्लाञ्जे ल्लजेल्लाजेदित्येते भर्त्सने शपि ।**

'लज प्रकाशने' कथादि । 'लजि इत्येके' इति **मैत्रेयरक्षित** । तदा लञ्जयेदिति पठितव्यम् । लञ्जापयेदिति **शाकटायन** । 'कथादि-पातिस्फायोऽग्लग्वम्' ( शाक० ४।१।१६७ ) इत्यगागमश्च । कथा-दीना पाते स्फायतेश्च अक् लक् वम् इत्येत आगमा णौ क्रमाद् भवन्तीत्यथ । ततो वृद्धिपुकौ । 'ओलजी ओलस्जी व्रीडने' तुदादी । तत्र च शो भवन् 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्त-मह्न्विङो' ( अष्टा० ६।१।१८६ ' इति तिङ्यनुदात्ते उञ्छति-वदुदात्त । लज लाजि भजने[1] । लाज लजि भत्सने च[2] । अत्र **मैत्रेयर-क्षित**—'चकारो भिन्नक्रम । एतावपि भजने[1] पठयेते इत्यथ '[3]

---

१ 'भत्सने' इति पूर्वमुद्रितोऽपपाठ ।          २ धातुप्रदीपेऽत्र पाठभेद । द्र० पृष्ठ २५ ।          ३ धातुप्रदीप १।२३७, २३८, पृष्ठ २५ । 'लाज लाजि भत्सने च' इति पाठे तु नैव चकारो भिन्नक्रम । धात्वर्थान तर पठितश्चकार पूर्वधात्वथमेव समुच्चिनोति । मैत्रयलेखात् प्रतीयते यत् तन्मूलपाठे 'लाज लाजि च भत्सने इत्येव पाठ आसीत् । तथा सत्येव चकारो भिन्नक्रम इति वक्तव्य भवति । तुलना कार्या 'परिपन्थ च तिष्ठति' (अष्ट० ४।४।३६) इति सूत्रेस्थेन 'चकारो भिन्नक्रम ' इति काशिकापाठेन । 'लाज लाजि च भर्त्सने' इत्यनुष्टुप एक चरणम् । आसीत् पुरा धातुपाठोऽपि श्लोकबद्ध, तस्येव च कानिचित् चरणानि पाणिनीये धातुपाठेऽप्युपलभ्यन्ते । यथा 'चते चदे च याचने' इति क्षीरतरङ्गिण्याम् ( १।६०८ ) । 'पश्चिमत्स्यमृगान् हन्ति परिपन्थ च तिष्ठति' ( अष्टा० ४।४।३५, ३६ ) इति पाणिनीये सूत्रेऽपि द्वे चरणे अनुष्टुभ । अत्र विशेषोऽस्मदीये 'स० व्या० शास्त्र का इतिहास' ग्रन्थे ( भाग २, पृष्ठ ६४,६५ ) द्रष्टव्य ।

इति । लज लजि भत्सने लाज लाजि भजने च इति तु **क्षीरस्वामी**[१] । 'लज लजु भत्सने, लाज लाजु भजने च' इति पठन् शाकटायनोऽपि अत्रैवानुकूल । एव च **भत्सनं**ग्रहरण भजनस्यापि काममुपलक्षरण द्रष्टव्यम् । लञ्जयेदिति च **क्षीरस्वामिन** पक्षे, तेन लजेरपि पट पुटादि दण्डके 'तुजि पिजी' त्यत्र च लजि लुजीत्यपि पाठात्[२] ॥

**भङ्गे रुजति हिसाया रोजयेदिति णौ रुजे ॥६९॥**

'रुजो भङ्गे' तुदादि । 'रुज हिंसायाम्' ग्रसादित्वात्[३] सकर्मकादेव रिणच् ॥

**घाटयेद् घण्टयेत् सङ्घभाषयोर्घटते मित ।**
**क्रमाद्विकासे शशपो स्फुटति स्फोटते पदे ॥७०॥**

**स्फोटयेत् स्फोटतीति द्वे भेदे विशरणे क्रमात् ।** •

अत्र घाटयतिस्फोटयत्योर्विवदन्ते । तत्र **धनपालस्तावत्**— 'चटास्पुट भेदने, उच्चाटयति आस्फोटयति । घट च सघाते । चकारात् पूर्वौ चात्रार्थे रिणचमुत्पादयत" इति । **शाकटायनस्तु**—'चटास्फुटौ घट च हन्त्यर्थां' इति । **क्षीरस्वामी** तु—"चट स्फुट भेदने । चाटयति स्फोटयति । 'घट च' घट धातुश्च भेदने वतते । 'हन्त्यर्थां' हन्त्यर्थाश्च धातवो रिणचमुत्पादयन्ति"[४] इत्युक्त्वा दशनान्तरमप्याह— घट च हन्त्यर्था । चट स्फुट धातू द्वौ घट च धातुस्त्रय एते हन्त्यर्था हन्तिना समानार्था णिचमुत्पादयन्ति'[४] इति । **मैत्रेयरक्षितस्तु**—'चट स्फुट भेदने । घट सघाते । हन्त्यर्थाश्च । येऽन्येषु नवसु गरणेषु हिसार्था पठचन्ते त इह द्रष्टव्या '[५] इति । तत्र

१ क्षीरतरङ्गिणी १।१५१,१५२ ॥ २ द्र० क्षीरतरङ्गिणी १०।१६७ ॥

३ आस्वद सकमकात् ( १०।१६३ ) इति प्रकरणे पाठादित्यथ ।

४ क्षीरतरङ्गिण्यामत्र भूयान् पाठभेद उपलभ्यते । द्र० १०।१६७-१६९ धातुसूत्रव्याख्या । ५ धातुप्रदीप १०।१८०—१८२, पृष्ठ १४१॥

नवस्विति शबादिविकरणविषयेषु भूवादिप्रभृतिषु । इहेति चुरादौ । एतेषु च पक्षेषु अन्त्यस्यानुकूल दवम् । 'घट घटि भाषार्थौ' । ततश्चार्थौ यथासख्य न भवत । 'घट चेष्टायाम्' । तस्य तु मित्त्वाद्धेतुमण्णिचि घटयेत् । 'स्फुट विकसने' । 'स्फुटिर्विशरणे' । स्फुटेति चन्द्र । इरित् फल तु इरितो वा' ( अष्टा० ३।१।५७ ) इत्यङ्विकल्प । अस्फुटत्, अस्फोटीत् ॥

**प्रमर्दने चाक्षेपे च मुटेदाद्ये तु मोटति ॥७१॥**

**सञ्चूर्णने चुरादेर्णौ मोटयेदतडस्त्रय ।**

'मुट आक्षेपप्रमदनयो', तुदादि । 'मुट प्रमदने' 'पुडि' इति **धनपाल** । **शाकटायनश्च** 'पुड्' इति पठन्नत्रैवानुकूल । **क्षीरस्वामी** तु एतौ पाठौ मुटि मुडि इत्यपरौ चावोचत्[१] । **मैत्रेयरक्षितस्तु** 'मुडि खण्डने' इत्यत्राह 'पुड्ि चेत्येके[२] इति । 'मुट सचूणने' ॥

**हिसातिक्रमयोरट्टेरट्टतेऽनादरेऽट्टयेत् ॥७२॥**

'अट्ट अतिक्रमहिंसनयो' । अत्र **मैत्रेयरक्षित** — 'दोपधोऽयमिति स्मयते' । 'ष्टुना ष्टु' (अष्टा० ८।४।४१) इत्यत्र **न्यासकारेण** तु तकारोपधोऽयमित्युक्तम्''[३] इति । **क्षीरस्वामी** तु पक्षद्वये[४]ऽपि पाठेऽत्र 'ष्टुत्व न कृतमसन्देहार्थम्' इत्यप्याह[४] । 'अन्ये अड्डेत्याहु' इति च[५] । तत्र चाद्ये पक्षे सश्चडो कृतयो 'नन्द्रा सयोगादय' (अष्टा० ६।१।३) इति दकारवर्ज द्विरुक्तौ ष्टुत्वे 'पूववत् सन' (अष्टा० १।३।६२) इति तडि च कृते अट्टिटिषते, आट्टिटदिति भवति । अन्त्ये[६] त्वतिट्टि-

१ द्र० क्षीरतरङ्गिणी १।२२१,२२३, पृष्ठ ५५ । २ धातुप्रदीप १।३२७, पृष्ठ ३० । ३ धातुप्रदीप १।२५१, पृष्ठ २६ ।

४ अत्ट अद्ट इति पक्षद्वयेऽपीत्यथ । ५ क्षीरतरङ्गिणी १।१६०, पृष्ठ ४७ ।

६ उपधाभूतस्य तकारस्य ष्टुत्वे पूर्वत्रासिद्धीयमद्विवचने' इति न्यायेन टकारद्वयसहितस्य द्वित्वे हलादिशेषे निमित्तभूतस्य टकारस्यापाये नमित्तिकस्य ष्टुत्वस्य निवृत्त्याऽभ्यासे तकार एवावतिष्ठते इत्यभिप्राय । माधवस्तु 'निमित्तापाये नैमित्तिकस्याप्यपाय' इत्यनाश्रित्य अटिट्टिषते आटिट्टत् इति रूप म यते ।

षते, आतिट्टदिति । 'अट्ट अनादरे" ।

**घट्टयेद् घट्टते द्वे स्ता चलने णौ शपि क्रमात् ।**

'घट्ट चलने' । अन्त्योऽनुदात्तेत् ॥

**णौ लोटयति भाषार्थे लुटच्चे ल्लोटति लोटने ॥७३॥**

**लोटते प्रतिघातेऽर्थे स्तेये लुण्टति लुण्टयेत् ।**

**रोटते प्रतिघातेऽर्थे रोषे रोटयतीति णौ ॥७४॥**

'लुट भाषाथ' 'लुट विलोटने' दिवादिभ्वादिश्च । अत्र भूवादिसूत्रे (अष्टा० १।३।१) **सुधाकर** —"लुड विलोडने इति डान्त । लान्तोऽपि तु दहशे-लोल । 'लोलद्भुजाकारबृहत्तरङ्ग' इति **माघे**[१] । डलयोरेकत्वस्मरणमिति **केचित्** इति वा प्रतिविधेयम्" इति । 'रुट लुट प्रतीघाते' । अनुदात्ततौ । ठान्ताविमावित्येके । तथा च **क्षीरस्वाम्ये**-वमेव पठित्वाह-'रुट लुट इत्येके । बाधृ लोटने इति लिङ्गाद्'[२] इति । तथा 'रुट दीप्तौ' इत्यनुदात्तेत्सु **स** एवाह[३] । लुटि इति तु **शाकटायन** । रुट लुट इति **हरियोगी** । रुटि लुटि स्तेये । **क्षीरस्वामी** तु 'रुठि लुठि **इत्येके** । रुण्ठति लुण्ठति'[४] इति । रुडु लुडु इति डान्तकाण्डे **शाकटायन** । 'लुण्ट स्तेये', लुण्टेति **क्षीरस्वामी**[५] । लुण्डेति **शाकटायन** । तत्र चाद्य एव पाठो 'जल्पभिक्षकुट्टलुण्टवृड षाकन्' (अष्टा० ३।२।१५५) इति सूत्रपाठानुसारी । यस्तु लुटि इत्यनेन लुण्टाक इति निर्वाह **क्षीरस्वामिन**[६] सोऽपि 'लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैव ग्रहणमिति नीत्या विरुध्यते । लुटि इत्यस्य लुण्टभावो लाक्षणिक । स च 'लुण्ट' इत्येव प्रतिपदोक्ते धातौ सम्भवति कथकार गृह्येत, लुण्टेत्यस्यैव झटिति परिस्फुरणात्[७] ।

---

१ माघे तृतीयसर्गे इति गणपतिशास्त्री लिलेख । २ क्षीरतरङ्गिणी १।४६७, पृष्ट १०२ । तत्र 'बाधृ रोटने इति लिङ्गात् इति पाठ ।

३ क्षीरतरङ्गिणी १।१६६ । ४ क्षीरतरङ्गिणी १।२२५, पृष्ठ ५६ ।

५ क्षीरतरङ्गिणी १०।२५ ॥ ६ द्र० क्षीरतरङ्गिणी १।२२५, पृष्ठ ५६ ।

७ या त्वियमालोचना क्षीरस्वामिन , सा चिन्त्या । तन्मते 'लुण्ट' धातोरेवाभावात्,

'कुट्टिलुण्डिवृड्जल्पभिक्षादाकट्' (शाक० ४।३।२५५)इति शाकटायनानुसारेण कुट्ट लुण्डेत्येव पाठपरिकल्पनेऽपि टकारसाहचर्यादनाङ्गस्य व्यक्तमेव। रुष रोषे रुट इत्यप्येके इति मैत्रेयरक्षित[1]। 'रुट भाषार्थ' इति च क्षीरस्वामी[2]॥

## कूटयेताप्रसादे णौ कूटेर्दाहे तु कूटयेत्।

'कूट अप्रसादे', चितादि। 'कुट प्रतापने' इत्येके, इति मैत्रेयरक्षित[3]। स एव तु पाठ प्रायेण दृश्यते। तदा कोटयेत प्रतापे णौ इति पठितव्यम्, कुट्ट प्रतापने। कुट्टयेतेति क्षीरस्वामी,[4] कुट्ट छेदनपूरणयोरिति च चुरादावेवाह[5]। कुत्सनयोरिति तु बहव। छेदन इत्येव पुन 'जल्पभिक्ष' (अष्टा० ३।२ १५५) इत्यत्र जिनेन्द्र। एवमेव च दुर्ग। सर्वथापि तस्य कुट्टयतीति द्रष्टव्यम्। कुट पक्षे तु 'कुट कौटिल्ये' इत्यस्य तुदादे कुटतीति। 'कूट दाहे' कथादि। तत्फल पुनरचुकूटदित्यत्र 'नाग्लोपिशास्वृदिताम्' (अष्टा० ७।४।२)

यदि हि तन्मते 'लुण्ट स्वत त्रो धातु स्यात्तर्हि लुटिधातोलुण्टाकपदसिद्धिर्व्याख्यास्यात्। यस्तु 'कुट्टलुण्ट वृड' (३।२।१५५) इति सूत्रपाठ स लुटि लुण्ट इत्युभयोरपि पक्षयोर अञ्ज-येनोपपद्यते। अतो न सूत्रलिङ्गाद् धातुपाठकल्पना न्याय्या। धातुस्वरूपविवादे तु देव एव शरणम्।

१ धातुप्रदीप १०।१३१, पृष्ठ १३७। २ क्षीरतरङ्गिणी १०।१६७॥ अत्र 'रुट भासार्थ' इति सम्यक् पाठो द्रष्टव्य। क्षीरतरङ्गिण्या 'भासार्था' इत्यस्यैव पाठस्य तत्र दर्शनात्। ३ 'कूट अप्रमादे। कूटयते। कुट प्रतापने इत्येके' इति धातुप्रदीपे (१०।१६०) पाठ। ४ क्षीरतरङ्गिण्या तु 'कुट प्रतापने। कोटयते इत्येव पाठ उपलभ्यते (द्र० १०।१४८), न तु पुरुषकारनिर्दिष्ट। सायणो धातुवृत्तौ (पृ० ३८८) दीक्षितश्च प्रौढमनोरमाया (पृष्ठ ६१८) पुरुषकारवदेव क्षीरस्वामिन पाठमुद्धरत।

५ क्षीरतरङ्गिण्या 'कुट्ट छेदनकुत्सनयो' इत्येव पठ्यते। सायणोऽपि पुरुषकारपाठवदेव स्वामिपाठमुद्धार (धातु० पृष्ठ ३८०)। प्रतीयते सायणदीक्षितादयो न साक्षात् क्षीरतरङ्गिणीमुपलब्धवन्तौ, त मतानि पुरुषकारमुखेनव ज्ञात्वाताभ्या निर्दिष्टानि।

इति ह्रस्वाभाव । 'परितापने' इति तु **मैत्रेयरक्षित**[१] । 'केत श्राम कुण गुण चामन्त्रणे' इति चकारादामन्त्रणेऽप्यय वर्तते । केत ग्रामेति **मैत्रेयरक्षित**पाठेऽप्यत्राशे न विवाद । बह्वनुमतत्वात् **पर**-माद्यमेव पाठमभिरोचयामहे ।

**भाषासंसर्गसंश्लेषे पोटयेत् पुटयेत् पुटेत् ॥ ७५ ॥**

'पुट भाषार्थ' । पुट संसर्गे', कथादि । 'पुट संश्लेषे' तुदादि ॥

**नृतौ नटत्यवस्पन्दे चुरादेर्णिचि नाटयेत् ।**

'नट नृतौ' । नतौ नृत्ताविति च **क्षीरस्वामी**[३] । उभयथापि नर्तन इत्येवार्थ । तच्च नाटचम्, यत्कारिषु नटव्यपदेश । न तु मार्ग-देशीशब्दाभ्या प्रसिद्ध नृत्य नृत्त च, यत्कारिषु नर्तकव्यपदेश । तत्र च वाक्यार्थाभिनयो नाटचम्, पदार्थाभिनयस्तु नृत्यम् । अभिनय-शून्य पुन शास्त्रोक्तभङ्ग्या गात्रविक्षेपो नृत्तमिति तद्विद । **नैघण्टुकाना** तु 'ताण्डव नटन नाटच लास्य नृत्य च नर्तनम्'[४] इत्यभेदव्यवहारो निरूढलक्षणयैव नेय, 'अन्याय्यश्चानेकार्थत्वम्'[५] इति **न्यायात्** । 'नट अवस्पन्दने' । तच्च नाटचम् । नाटचे इत्येव **चन्द्र** । अत्र च णोपदेशाणोपदेशविभागो 'णो न' (अष्टा० ६।१।६५) इत्यत्र **भाष्ये** दर्शित —'सर्वे नादयो णोपदेशा नृतिनन्दि-नर्दिनक्किनाटिनाथृनाधृनृवर्जम्' इति । **केचित्** पुन थान्तमेव पठन्ति न धान्तम् । तथा च 'णाधृ नाथृ याच्ञोपतापैश्वर्याशीषु' इत्यत्र **मैत्रेयरक्षित** —'आद्यो णोपदेश नेतर'[६] इति । तथा च **श्रीधरो** 'नृ' त्यागेन नृत्यादीन् पठित्वा 'एतान् सप्त वर्जयित्वा' इत्याह । नटिश्चुरादिण्यन्तो नाटि । नृती गात्रविक्षेपे । टुनदि

१ धातुप्रदीपे तु 'कूट परिदाहे' इति पाठ । द्र० १०।३३५, पृष्ठ १४६ ।

२ धातुप्रदीप १०।३३६-३३९, पृष्ठ १५० ।

३ क्षीरतरङ्गिण्या (१।२०९) 'नतावित्येके' इति पाठ उपलभ्यते । द्र० पृष्ठ ५३ ।

४ अमर १।६।१०॥ तत्र 'नर्तनम्' इत्यस्य स्थाने 'नर्तने' इति पाठ ।

५ पूर्वमीमासा १।३।२६॥

६ धातुप्रदीप, पृष्ठ ९ ।

समृद्धौ । नर्द गर्द शब्दे । **शाकटायनन्यासे** तु णोपदेशो वाऽयम् । 'नक्क ठक्क नाशने, नॄ नये' । तत्र च प्रणटति प्रनाटयति इत्यादौ 'उपसर्गादसमासेऽपि णोपदेशस्य' (अष्टा० ८।४।१४) इति णत्वं, तदभावश्च णोपदेशफलम् ; घटादौ चायं नटिः पठ्यते । अर्थपाठे त्वस्य विवदन्ते । तत्र तावन्नृताविति नृत्ताविति गताविति च पक्षत्रयं **मैत्रेयरक्षितः** प्रतिपेदे[1] । **क्षीरस्वामी** तु—'नट नतौ, नटयति शाखाम्,[2] नृत्तौ तु नाटयति'[3] इति ॥

**भाषार्थे पाटयेद् ग्रन्थे पटयेद् गमने पटेत् ॥७६॥**

**वण्टयेद्वण्टतीत्येते णिशपोः स्तां विभाजने ।**
**णावदन्ताद्वटेर्ग्रन्थे वटयेद् वेष्टने वटेत् ॥७७॥**

'पट भाषार्थः' । 'पट वट ग्रन्थे' कथादिः । स च वेष्टनमिति **क्षीरस्वामी**[4] । 'अट पट गतौ' । 'वटि विभाजने', चुरादिः कथादिर्भूवादिश्च । तत्र च कथादौ वटेत्येके । तथा च **मैत्रेयरक्षितो** वटेति पठित्वा 'वटीत्येके'[5] इत्याह । तदा वटयेदित्यपि द्रष्टव्यम् । वण्टापयेदिति तु **शाकटायनः** । तच्च लज्जापयेद्[6] इतिवन्नेयम् । **मैत्रेयरक्षितश्**चाह-'अदन्तेषु पाठबलाददन्तत्वेऽपि वृद्धिरित्यपरे,[7] वण्टापयति लज्जापयति'[8] इति । चुरादौ तु स एवाह-'वटि विभजने इति भूवादौ पठ्यते । ततो हेतुव्यापारे णिचि विभाजनेऽर्थे वण्टयतीति सिध्यति । किन्त्वसौ कर्त्रभिप्राये क्रियाफले आत्मनेपदी । अनेन पुनस्तत्रापि वण्टयतीति । अन्ये पुनर्वैचित्र्यार्थमस्योपादानमिच्छन्ति'[9] इति । तदा **णिशपोः स्तां विभाजने** इत्येतद् विभाजने विभजने चेति

---

१. द्र० धातुप्रदीप १।७८५, पृष्ठ ५५ । २. नमयतीत्यर्थः ।
३. क्षीरतरङ्गिणी १।५२८, पृष्ठ १०८ । ४. द्र० क्षीरतरङ्गिणी १०।२४५, पृष्ठ ३११ । ५. धातुप्रदीपे १०।३००, पृष्ठ १४८ इत्यत्र नोपलभ्यते पक्षः ।
६. द्रष्टव्यम्—६८ कारिकाव्याख्याने (पृष्ठ ५५) । ७. शाकटायन इत्यर्थः ।
८. नोपलब्धोऽयं पाठो धातुप्रदीपे । ९. धातुप्रदीप १०।५१ पृष्ठ १३३ ।

व्याख्येयम् । भाजेरपि पृथक्कर्मकमणो[१] विभजनार्थत्वसम्भवाद् । बहुसम्मतत्वाद्वोभयत्रापि विभाजन इत्येव युक्त पाठ **मन्यन्ते**। **क्षीरस्वाम्यादय** पुनबहुवश्चुरादि डान्त पठन्ति[२] । डान्तकाण्ड चैवमनुसृत भवति। **शाकटायन** पुनभू वादिमपि डान्तकाण्ड एवाध्यगीष्ट। 'वट वेष्टने, वट भट परिभाषणे' इति च घटादौ पठचते। बटेत्यप्याद्यो बहुषु कोशेषु दृश्यते।

**श्लेषालस्योपघातेषु प्रतिघाते क्रमाल्लुठेत्।**
**लुण्ठेल्लोठति लोठेत किन्तु गत्या च लुण्ठति ॥७८॥**
**रुण्ठतीति गतौ रोठेदुपघाते**

'लुठ श्लेषणे, तुदादि । 'लुड इत्येके' इति **मैत्रेयरक्षित**[३]। डान्तकाण्ड चैवमनुसृत भवति। 'लुठतीति लक्ष्यदशनात् तुदादौ पाठ' इति भूवादौ **क्षीरस्वामी**[४] । 'लुठि आलस्ये प्रतिघाते च'। 'रुठ लुठ उपघाते'। 'उठ इत्यप्येके' इति **मैत्रेयरक्षित**[५] । उठ इत्येव **धनपाल** । **क्षीरस्वामी** त्वेवमेव पठित्वा 'रुठ लुठेत्यपि दौर्ग'[६] इत्याह। ऊठ इत्येव **शाकटायन** । 'लुठ प्रतिघाते'। अत्र भूवादिसूत्रे (अष्टा० १।३।१) **सुधाकर** — लुट प्रतिघाते इति लुटवद् द्वितीयान्तोऽपि प्रलुठितो लोठमान इति प्रयोगदशनादूरीकृत' इति। **कैयटस्तु** 'धातो कर्मण समानकर्तृकादिच्छायां वा' (अष्टा० ३।१।७) इत्यत्र लुलुठिषते इति **भाष्य** व्याचक्षाण आह— 'रुठ लुठ प्रतिघाते इति द्युतादौ पठचते' इति। 'रुठि लुठि गतौ' ॥

**ऽथ कण्ठते।**
**शोके यो कण्ठयेत् कण्ठेत् कठेत् स्यात् कृच्छ्रजीवने ॥७९॥**

---

१ पृथक्कम पृथक्करणम्, तच्च कम क्रिया यस्य, तस्येत्यथ । २ क्षीरतरङ्गिणी १०।४३, पृष्ठ २८४। ३ धातुप्रदीप ६।१००, पृष्ठ ११२।
४ क्षीरतरङ्गिणी १।४९७, पृष्ठ १०२। तत्र 'तुदादौ पाठ्य' इति पाठ ।
५ धातुप्रदीपे १।३४०, पृष्ठ ३१। ६ क्षीरतरङ्गिणी १।२३४, पृष्ठ ५७।

अथशब्द पूर्वार्थान्वियाशङ्कापरावृत्तिपर । 'कठि शोके'[१] । 'कठ कृच्छ्रजीवने' । एष्वाद्योऽनुदात्तेत् ॥

**गतिप्रतिहतौ शोठत्यालस्ये शोठयेदिति ।**

'शुठ गतिप्रतीघाते' । 'शूठ' इति **क्षीरस्वामी**[२] । प्रतीघात इति **धनपाल** । तथा च 'कुठि च' इत्युत्तरधातौ कुण्ठ इत्यादौ प्रतिहतिमात्र प्रतीयते । 'अनिशित इत्यर्थ' इति च स[३] एवाह । 'शुठ आलस्ये' ॥

**शुण्ठयेच्छुण्ठतीत्येव शोषणे णौ शपि क्रमात् ॥८०॥**

'शुठि शोषणे' । अत्र णौ **क्षीरस्वामी**–केचिदेनमकारान्त पठन्ति, लक्ष्यतस्तदपि प्रमाणम्'[४] इति तदा शोठयेदिति पठितव्यम् ॥

**शठयेच्छ्वठयेदेते द्वे सम्यगवभाषणे ।**
**गत्यसस्कारधात्वर्थे शाठयेच्छ्वाठयेदिति ॥८१॥**
**कैतवे शठतीति स्याच्छ्लाघाया शाठयेत णौ ।**

'शठ श्वठ सम्यगवभाषणे' इति **मैत्रेयरक्षित**[५] । कथादी । 'सम्यगाभाषणे' इति **दुग** । सम्यगाभाषणे सम्यग्वचनक्रियायामिति **क्षीरस्वामी**[६] । 'सम्यग्भाषणे' इति **शाकटायन** । 'शठ श्वठ असस्कारगत्यो , श्वठि इत्येके इति **मैत्रेयरक्षित**[७] । शठ कैतवे च' चकारात् पिठ हिंसासक्लेशनयोरित्युक्तावर्थौ गृह्येते । **क्षीरस्वाम्यादय**

---

१ शोकोऽत्राऽऽध्यानम् इति क्षीरस्वामी । क्षीरत० १।१६७, पृष्ठ ४८ ।

२ क्षीरतरङ्गिण्याम् ( १।२३७ ) अ यथाऽय पाठ उपलभ्यते ।

३ धनपाल एवेत्यथ ।          ४ क्षीरतरङ्गिण्या १०।९५ पाठो नोपलभ्यते । सायणोऽपि धातुवृत्तौ ( पृष्ठ ३८५ ) स्वामिनाम्नोद्धरतीम ग्रन्थम । कदाचिदत्र-क्षीरतरङ्गिण्या पाठभ्रशः सजात स्यात् ।          ५ धातुप्रदीप १०।३६७, ३६८, पृष्ठ १४७ । तत्र 'सम्यगाभाषणे' इति पाठ ।          ६ नाय क्षीरतरङ्गिण्या पाठ उपलभ्यते । तत्र तु 'शठ श्वठ असम्यग्भाषणे' इति पाठ ( द्र० क्षीर० १०।२४४, पृष्ठ ३११ ) ।          ७ धातुप्रदीप १०।२८-३०, पृष्ठ १३२ । तत्र 'सस्कारगत्यो ' इति पाठ । क्षीरतरङ्गिण्या ( १०।२६ ) असस्कारगत्यो ' इत्येव पाठ , तत्रैव च 'श्वठि इति दौर्गा , श्वण्ठयति' ।

पुनश्चकार नैव पठन्ति[१] । 'शठ श्लाघायाम्' चितादि ॥

**मण्ठते शपि शोकार्थे मठेन्मदनिवासयो ॥ ८२ ॥**

'मठि शोके' । 'मठ मदनिवासयो' ॥

**वण्ठते त्वेकचर्याया स्थौल्ये शपि वठेदिति ।**

'वठि एकचर्यायाम्', अनुदात्तेत् । 'वठ स्थौल्ये' ॥

**मुण्डते मार्जने मुण्डे खण्डने शपि मुण्डति ॥ ८३ ॥**

'मुडि मार्जने' । शोधन इत्यर्थ इति च धनपाल । मज्जन इत्यन्ये । तथा च **क्षीरस्वामी**—'मज्जन शुद्धिन्यग्भावश्च'[२] इति । 'मुडि खण्डने' । **क्षीरस्वामी** त्वाह–'अर्थभेदात् पुन पाठ । अत एव मुडि खण्डनप्रमर्दनयो इति **कण्ठ**[३] । शुठीति **कौशिकदुर्गौ** शुण्ठति'[४] इति । 'मुट प्रमदने'[५] इत्यत्रापि ( ठा ? ) डान्तेन मुडीति पाठात् पुन पाठ[६] ॥

**भूषार्थे मण्डतीति स्यात्तत्र मण्डयतीति णौ ।**
**मण्डते वेष्टने**

'मडि भूषायाम्' । णौ तु हर्षे चेत्यधिकम् । वडि वेष्टने मडि च' । **क्षीरस्वामी** त्वाह—"वडि विभाजने, मडि च । पृथक् सूत्रादर्थान्तरेऽपि[७] । **नन्दी** तु—'वडि विभाजने मडि वेष्टने' इति च

---

१ द्र० क्षीरतरङ्गिणी १।२३६, पृष्ठ ५७ । २ क्षीरतरङ्गिणी १।१ ८, पृष्ठ ४६ । ३ सरस्वतीकण्ठाभरणकर्त्ता श्रीभोजदेव इत्यथ ।

४ द्र० क्षीरतरङ्गिणी १।२२३, पृष्ठ ५५ । तत्र 'मुटि इति कौशिकदुर्गौ, मुण्टति' इति पाठ । पुरुषकारे पाठभ्रंश सजात इति प्रतीयते

५ अय धनपालसम्मत पाठ । द्र० पुरुषकार एकसप्ततिकारिकाव्याख्याने ( पृष्ठ ५७ )। ६ क्षीरस्वाम्युक्तस्य 'पुन पाठ' इत्यस्य पुरुषकारोक्तेय व्याख्या चिन्त्या । क्षीरस्वामी तु पूवत्र पठितस्य मुडि मज्जने (१।१७८) इत्यस्यवार्थभेदात् पुन पाठ प्रतिजानीते । तौदादिकस्य मुट प्रमदने इति स्थानिकस्य मुडिधातोस्तु स्वरभेदाद् रूपभेदो भवति । अतो नव तमपेक्ष्य पुन पाठ इति शक्यते वक्तुम । ७ अय ग्रन्थ 'मडि च' इति धातुसूत्रव्याख्याने । द्र० क्षीरत० १।१७५ ॥

पठति'[१] इति । तच्चार्थान्तर प्रयोगतोऽवगन्तव्यम् ॥

**स्तुत्यामीट्टे तत्रेडयेण्णिचि ॥ ८४ ॥**

'ईड स्तुतौ' आद्योऽदादिरनुदात्तेत् ॥

**मन्थार्थे खण्डते खण्डेर्भेदार्थे खण्डयेण्णिचि ।**

'खडि मन्थे' । स च मन्थनम् । 'खड खडि कडि भेदे' । तत्र च खडेत्यस्य खाडयतीति द्रष्टव्यम् ॥

**हेडते ऽनादरे हेडेर्वेष्टने हिडयेन्मिथ ॥ ८५ ॥**

**होडतीति गतौ होडेर्होडते ऽनादरे पुन ।**

'हेडृ होडृ अनादरे' अनुदात्तेतौ । 'हेड वेष्टने' घटादि । तत्र च मिता ह्रस्वो[२] भवन् 'एच इग्घ्रस्वादेशे' ( अष्टा० १।१।४८ ) इतीगेव भवति । हेतुमण्णिच्त्वात्तु 'णिचश्च' ( अष्टा० १।३।७४ ) इत्यात्मनेपदमप्यूह्यम् । अण्यन्तावस्थाया तु हेडतीति द्रष्टव्यम् । 'हुडृ होडृ गतौ' । 'हुडृ हूडृ' इति **धनपालशाकटायनौ** । **क्षीरस्वामी** त्वाह—'हूडृ हुडृ हौडृ गतौ । हूडति होडति हौडति । होडृ इति **चन्द्र** । होडति'[३] इति ॥

**कण्डयेदिति भेदे णौ मदे तु शपि कण्डते ॥ ८६ ॥**

'कडि भेदे', स चात्रावघात । 'कडि मदे', अनुदात्तेत् । कडेर्भूवादितुदाद्यो पाठात्[४] कडतीत्यपि भवति । **क्षीरस्वामी** तु भूवादौ

---

१ अयमश वडि विभाजने' इति धातुसूत्रव्याख्याने । तत्र 'नन्दी तु वटि विभाजने वडि वेष्टने ' इत्येव पाठ उपलभ्यते ( द्र० क्षीरत० १। १७४ ) । सायणस्तु धातुवृत्तौ ( पृष्ठ ७४ ) पुरुषकारवदेव स्वामिपाठमुद्धरति । ट्रिवेण्ड्रममुद्रिते पुरुषकारेऽत्रत्या (पृष्ठ ७०) तिस्रोऽपि टिप्पण्य क्षीरस्वामिग्रन्थानुपलम्भादयाथार्थ्यं भजन्ते ।

२ मिता ह्रस्व (६।१।९२) इति सूत्रण । ३ द्र० क्षीरतरङ्गिणी १।२४९, पृष्ठ ५८ । तत्र 'होड इति चन्द्र । होडति' इति पाठो नोपलभ्यते । मुद्रिते चान्द्रधातुपाठे 'हौडृ इति पाठोऽप्रमाणिक इत्यस्मादेव पाठात् प्रतीयते ।

४ 'कड मदे' इत्येव रूपादित्यर्थ । उभयत्र पाठफल तु देवेन 'स्वरभेदाद्

परस्मैभाषमपि कडीत्येव पठित्वाह्—'कडेति दुर्ग'[1] इति ॥

**लाडयत्युपसेवाया विलासे तु लडेच्छपि ।**

'लड उपसेवायाम्' । 'लड विलासे । 'लड ईप्साया वा' इति च **क्षीरस्वामी**[2] । लळयोलडयोश्च कैश्चिदविशेषाश्रयणाल्लाळयति ललना इत्यपि भवति[3] । घटादौ पुन पठ्यते— जिह्वोन्मथने लडि' इति । जिह्वाया उन्मथने लडिर्मिद् भवतीत्यर्थ । लडयति जिह्वाम् । **कौमारास्त्वाहु** —'अन्ये जिह्वोन्मथने इति द्वन्द्व व्याचक्षते । तदा लडयति शत्रुमित्यपि भवति इति । **क्षीरस्वामी** तु—'जिह्वोन्माथनयोर्लडि' । लड विलासे इत्यय भूवादिर्जिह्वाविषयायां क्रियायामुन्माथे[4] च मित् । लडयति जिह्वाम्, लडयति दधि । अन्यत्र लाडयति मित्रम्[5] । जिह्वोन्मथन इति गुप्त । 'जिह्वाशतान्यल्लडयत्यभीक्ष्णम्'[6] इति । धनपालस्तु 'जिह्वोन्मथने लडि । आर्याणा तु जिह्वोन्मथनयोरिति पाठ' इति ॥

**मृडेर्मृणाति सुखने तत्रैव मृडतीति शे ॥ ८७ ॥**

'मृड सुखने', क्र्यादि तुदादिश्च अन्ये त्वाद्य 'मृद क्षोदे, मृड सुखने च' इति पठन्ति । तथा च 'गुध रुषि मृद सक्षोदे मृड सुखनार्थे च कुन्थ सक्लेशे' इति **श्लोकधातुपाठ** । क्वचित्तु 'मृड च' क्षोदार्थंतैव दृश्यते ॥

**वैकल्यदाहरक्षासु कुण्डेत् कुण्डेत कुण्डयेत् ।**

'कुडि वैकल्ये' । **शाकटायन** पुनष्टकारान्तमध्येऽमुमध्यैष्ट ।

---

द्विरुच्यते इत्यस्मिन् श्लोक (५५) उक्तम् ।  १ क्षीरतरङ्गिणी १।२५१ पृष्ठ ५६ ।  २ द्र० क्षीरतरङ्गिणी १।२५०, पृष्ठ ५६ । तत्र 'लल ईप्साया वा' इति पाठ ।  ३ द्र० क्षीरतरङ्गिणी १।२५०, पृष्ठ ५६ ।
४ 'उन्मथने' इति क्षीरतरङ्गिण्या (१।५५१) पाठ ।  ५ 'चित्रम्' इति क्षीरतरङ्गिण्या ( १।५५१ ) पाठ ।  ६ क्षीरतरङ्गिणी १।५५१, पृष्ठ ११२ । तत्र 'जिह्वाशतान्युल्लनयत्यभीक्ष्णम् इति पाठ ।

क्षीरस्वामीत्वाह—'कुठीति **कौशिकदुर्गो** कुण्ठति कुण्ठ'[1] इति । 'कुडि दाहे' अनुदात्तेत् । 'कुडि रक्षणे' ॥

**तोडनार्थे तुडेस्तुण्डेस्तुडेत् तोडति तुण्डते ॥ ८८ ॥**

तुडयोस्तुण्डेश्च तुडेदित्यादि भवतीत्यर्थं । 'तुड तोडने' तुदादि । 'तुड तोडने' । 'तूड्' इति **शाकटायन** । 'तुडि तोडने', अनुदात्तेत् । तच्च दारण हिंसा च[2] । यदाहान्त्ययो[3] **क्षीरस्वामी** ।

**[4]कल्याणे भण्डयेद् भण्डे परिहासे तु भण्डते ।**
**प्रेरणे जोडयेच्छे तु बन्धने जुडतीति च ॥ ८९ ॥**

'जुड बन्धे । तत्र चैव यथापठितेऽर्थे जोडयेदिति जुडतीति च भवतीति वाक्याथसमुच्चये चकारो व्याख्येय । न पुनर्बन्धन एव जोडयेदिति च भवतीति ॥

**सङ्घाते पिण्डयेत् पिण्डेस्तत्रैव शपि पिण्डते**

'पिडि सघाते' । अन्त्यो ऽनुदात्तेत् ॥

**कणे कणति शब्दार्थे काणयेण्णौ निमीलने ॥ ९० ॥**

कण शब्दार्थे', 'कण निमीलने' । घटादौ च कण रण गतौ' इति पठ्यते । तस्य तु हेतुमण्णिचि कणयेत् शब्दाथस्य तु काणयेदित्येव ॥

---

१ द्र० क्षीरतरङ्गिणी १।२२०, पृष्ठ ५५ । तत्र 'कुटि इति कौशिकदुर्गो' इति पाठ । सायणोऽपि धातुवृत्तौ 'कु‿ीति कौशिकदुर्गो' इत्येवोद्धरति ।

२ गणपतिशास्त्री स्वीये सस्करणे—"च यदा' इत्यस्य स्थाने चेत्या इति पठनीय भाति ' इत्युक्तवान् । तच्चि त्यम यथास्थितपाठस्यव युक्तत्वात् ।

३ अ त्ययो 'तूड तोडने तुडि तोडने इत्यनयोर्धात्वोर्व्याख्याने । 'तुडि तोडने' इत्यत्र 'तोडन हिंसा' इत्युक्तवान् (क्षीर० १।१७९, पृष्ठ ४९) तूड तोडने इत्यत्र च 'तोडन द्रावणम् इति ( क्षीर० १।२४५, पृष्ठ ५८ ) तत्र 'दारणम् इति शुद्ध पाठो द्रष्टव्य ।

४ इदमर्धं पद्य क्वचिन्न पठ्यते । पुरुषकारे चाप्ययमशो न व्याख्यात । पर तु सायणेन धातुवृत्तौ 'परिहास इति देव ' इत्येवमुद्धरता 'परिहासे तु भण्डते इति चरणस्थिति सूचिता ।

भूवाद्योर्घुरिणघूर्ण्यो स्ता घोणते घूणते शपि ।
भ्रमणेऽत्र तुदाद्यो शे स्याता घुणति घूर्णति ॥ ६१ ॥

'घुण घूर्ण भ्रमणे' । अत्रेति भ्रमणे एवेत्यर्थ ॥

अणेरणति शब्दार्थे प्राणने त्वण्यते श्यनि ।

'अण शब्दार्थ , अण प्राणने' अनुदात्तेत् । अनेति **शाकटायन** । तवर्गान्तिकाण्ड चैवमनुसृत भवति ॥

मित श्रणति दानार्थे श्राणयत्यत्र णौ पदम् ॥ ६२ ॥

'चण शण श्रण दाने', घटादय । गतावित्येके' इति **मैत्रेयरक्षित**[1] । मित्फल तु पुन श्रणयतीति हेतुमण्णिचि ह्रस्व । 'श्रण दाने', विपूर्वश्चाय दृश्यते[2] । विश्राणन वितरणम्'[3] इति ॥

व्रणेच्छब्दार्थविषये व्रणयेद् गात्रचूर्णने ।

'व्रण शब्दार्थ', 'व्रण गात्रचूर्णने' कथादि ॥

आमन्त्रणे तु कुणयेच्छब्दे चोपकृतौ कुणेत् ॥ ६३ ॥

'कुण आमन्त्रणे', कथादि । 'कुण शब्दोपकरणयो' तुदादि ॥

बन्धनेऽन्तति सातत्यगमनेऽतति

'अति अदि बन्धने' इति **मैत्रेयरक्षित**[4] । 'तान्त द्रमिडा पठन्ति, आर्यास्तु दान्तम्' इति **धनपाल** । **क्षीरस्वामी** तु—'अति अदि' इत्येव पठित्वा तथैव चोदाहृत्याह—'अते पाठोऽनार्ष । अन्ये अदि इति बन्धने इति पेठु, इन्ताञ्चकार'[5] इति । अत सातत्यगमने ॥

चिन्तयेत् ।

---

१ धातुप्रदीप १।८००-८०२, पृष्ठ ५६ । २ 'भज विश्राणने' ( १०। १७९ ) इति लिङ्गात् । ३ अमर २।७।२९॥ ४ धातुप्रदीप १।६०, ६१, पृष्ठ ४१ । ५ क्षीरतरङ्गिणी १।५१, पृष्ठ २५ । तत्र अदे पाठोऽनार्ष इत्युक्तम्, न त्वते ।

**स्मृत्या चेतति सञ्ज्ञाने तत्र चेतयते णिचि ॥ ६४ ॥**

चिति स्मृत्याम्', 'चिती सञ्ज्ञाने', 'चित सचेतने' इति मैत्रेयरक्षित[1]। सवेदन इति बहव[2] ॥

**कृणत्ति कृन्ततीत्येते वेष्टने छेदने क्रमात् ।**
**कीर्तयेदिति सशब्दे**

'कृती वेष्टने', रुधादि । कृती छेदने', मुचादि । कत सशब्दने' । 'उपधायाश्च' ( अष्टा० ७।१ १०१ ) इतीत्त्व रपरत्व च । 'उपधाया च' ( अष्टा० ८।२।७८ ) इति दीर्घ ॥

**गत्यर्थे पतयेत् पतेत् ॥ ६५ ॥**

'पत गतौ वा' कथादि । **केचित्तु** वेति न पठन्ति[3] । तथैव च 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' ( अष्टा० ३।२।१५८ ) इत्यत्र वृत्तौ दृश्यते । 'वा' पाठे तु सति यावदुपयुक्त वृत्तिकृता [तावत्] पठितमिति कल्पनीयम् । तत्र च 'वा' पाठपक्षे तस्य णिज्विकल्पार्थत्वात् पतेत्यस्य पतयेत् पतेदिति भवति । पत्लृ गतौ इत्यस्य तु पतेदित्येवेति । विकल्पफल पुनर्लुङादावपतीत् पताञ्चकार अपप्तत् पपातेत्यादिषु द्रष्टव्यम् । तत्र च 'पताम्' इत्यत्र 'कास्यनेकाज्ग्रहण चुलुम्पाद्यर्थम्' इति वार्त्तिकेन[4] आम् । अपप्तत् इत्यत्र लृदित्वादङ् । 'पत पुम्' ( अष्टा० ७।४।१९ ) इति पुम् ॥

**यतते तु प्रयत्नार्थे निराकारे तु यातयेत् ।**

'यती प्रयत्ने', 'यत निकारोपसस्कारयो' । 'निराकार' इति

---

१ धातुप्रदीप १०।१३४, पृष्ठ १३८ । २ क्षीरस्वामी तु 'चिती सञ्ज्ञाने' ( १।३४ ) इति धातुव्याख्याने 'चुरादौ चित सवेदने' इत्युक्तवान् । परन्तु क्षीरतरङ्गिण्या चुरादौ 'सचतने इत्यव पठ्यते ( द्र० क्षीर० १०।१२४ ) ।

३ धातुप्रदीपे 'वा' न पठ्यते द्र० १०।३०४, पृष्ठ १४८ ) । क्षीरस्वामी तु पठति ( द्र० क्षीर० १०।२४६, पृष्ठ ३१३ ) । स च पक्षान्तरे 'वा' शब्दमुत्तरधात्वेकदेशमप्याह । ४ महा० ३।१।३५ ॥

तु पाठो दृश्यते । 'निराकार परिभव इति च **क्षीरस्वामी**[1] । उपस्कारोपसस्कारयो पुन पाठकृतो[2] विप्रवदन्ते । तथा **चाख्यातनिघण्टु** —'यत्ने प्रैषे निराकारे यातयेदप्युपस्कृतौ' इति । **श्लोकधातुपाठश्च**—'यत उपसस्कारनिकारार्थं स निरश्च धान्यधनवाची'[3]इति ॥

**[4]वर्तयेद् भाषणार्थे णौ वतने ऽपि वतते ॥ ९६ ॥**

'वृतु भाषार्थ । 'वृतु वर्तने, अनुदात्तेत् ॥

**ग्रथ्नातीति तु सन्दर्भे ग्रन्थयेद् ग्रन्थतीति यौ ।**
**कौटिल्ये ग्रन्थते ग्रन्थेर्ग्राथयेद् ग्रथति ग्रथे ॥ ९७ ॥**

'ग्रन्थ सन्दर्भे', क्र्यादि । 'अनिदिताम्' ( अष्टा० ६।१।२४ ) इति न लोप । 'श्रन्थ ग्रन्थ सन्दर्भे' । 'ग्रथि कौटिल्ये, अनुदात्तेत् । 'ग्रथ बन्धने', युजादि ॥

**हिसासक्लेशयोर्मन्थेन्मथेन्मथ्नाति लोडने ।**

'मथि हिसासक्लेशयो । **क्षीरस्वामी** तु मन्थेति पठित्वा मथ्यत इति चोदाहृत्य 'मथि इति दौर्ग, मन्थ्यते[5] इत्याह । 'मथे विलोटने' । 'मन्थ विलोटने', क्र्यादि । भूवादौ चामु **मैत्रेयरक्षित**[6] पठति, **चन्द्रदुर्गौ** च । तदा मथेदित्येतद् विलोटनेऽप्यावृत्त्या काम व्याख्यायताम् ॥

---

१ क्षीरतरङ्गिण्या ( १०।१८१ ) तु 'यत निकारोपस्करयो । निकार स्वेदनम्' इत्येव पाठ उपलभ्यते । यथा तु स्वामिनाम्ना पुरुषकारे पाठ उद्धृतस्तथैव सायणभट्टोजिदीक्षितावप्युद्धरत । द्र० क्षीरत० पृष्ठ ३०१, टि० ४ ।

२ 'पाठका ' इति पाठा तरम् ।

३ निरुत्तरो यतिर्धा यधनविषय क्रियावाचीत्यथ । यथा—ऋण निर्यातयति ।

४ एतच्चरणम् एकत्रिशदुत्तरशततमश्लोकविवरणे 'णौ वतयति भाषार्थे इत्येव पठति पुरुषकार ।

५ द्र० क्षीरतरङ्गिणी १।३७, पृष्ठ २२ ।

६ धातुप्रदीप १।४१, पृष्ठ १२ । 'विलोडने इति तत्र पाठ ।

**कुथ्नाति कुन्थेत् सङ्क्लेशे पूतीभावे तु कुथ्यति ।। ६८ ।।**

'कुन्थ सङ्क्लेशे', क्र्यादि । सश्लेषणे' इत्येके । तथा च 'सश्लेषणे सश्लेषणक्रियायाम्' इति क्षीरस्वामी[1] । 'कुथि हिसासङ्क्लेशयो' । 'कुथ पूतिभावे', दिवादि ॥

**प्रथते प्राथयत्येतत् प्रख्याने द्वितय प्रथे ।**
**पृथे पर्थयतीत्येतत् प्रक्षेपे णौ पद विदु ।। ६९ ।।**

'प्रथ प्रख्याने' । आद्यो घटादिरनुदात्तेत् । तत्र च हेतुमण्णिचि मित्त्वाद्ध्रस्वे प्रथयति । अन्त्ये तु—'नान्ये मित[2] इत्यमित्त्वान्न ह्रस्व । 'प्रथ प्रक्षेपे' । केचित् पुनर्घटादौ च पृथि पठन्ति । तथा च क्षीरस्वामी—"पृथु विस्तारे । पथति[3] । प्रथे षिवन् सम्प्रसारण चेति प्रथे सम्प्रसारणविधादनाषमम मन्यन्ते'[4] इति । यदप्रथयत् तत् पृथिव्यै पृथिवित्वम्[5] इत्यस्य श्रौतस्य निर्वचनस्यानार्षपक्ष एवाञ्जस्यम् । अन्यथा हि यदपथयदित्येव निर्ब्रूयात् । सवथापि प्रथेर्घटादिपाठे तत्फल 'घटादय षित'[6] इति षित्त्वादङि सति प्रथेतिरूप द्रष्टव्यम् । येऽमी घटादय आत्मनेपदिन पठितास्ते षिद्वद् भवन्तीत्यथ ।

**क्रथत्ययौ[7] यौ हिसाया क्राथयेत्क्रथते क्रथेत् ।**

'श्रथ श्लथ क्रथ क्लथ हिसार्था', घटादय । 'क्रथ हिसायाम्', स्वरितेत् । शाकटायनस्य तु परस्मैपदी । अपरे पुनरेन न पठन्ति । तथा च 'जासिनिप्रहणनाटक्राथपिषा हिसायाम्' ( अष्टा० २।३। ५६ ) इत्यत्र चोरस्योत्क्राथयति इत्यत्र निपातनाद् वृद्धिरिति वृत्ति ।

१ क्षीरतरङ्गिण्या ( ६।४७ ) नैष पाठ उपलभ्यते । २ क्षीरतरङ्गिणी धातुसूत्र १०।८० । ३ धातोरनुदात्तेत्त्वात् 'पथते इति युक्तम् । तथव च क्षीरतरङ्गिण्या (१।५१३, पृष्ठ १०६) पाठ ।
४ द्र० क्षीरतरङ्गिणी १।५१३ । तत्र 'प्रथे सम्प्रसारणाद् अनाषमम मन्यन्ते' इत्येव पाठ । ५ तै० ब्रा० १।१।३।। ६ क्षीरतरङ्गिणी, धातुसूत्र १।५२२।। ७ अयौ = अयुजादावित्यथ ।

सति हि चौरादिके 'नान्ये मित'[1] इति मित्त्वनिषेधादयत्नसिद्धा वृद्धिर्न निपातनसाध्या ॥

**पुथ्येत् पुन्थति हिंसार्थे भाषार्थे पोथयेदिति ॥ १०० ॥**

'पुथ हिंसायाम्,' दिवादि । 'पुथि हिंसासक्लेशयो । 'पुथ भाषार्थे' ॥

**दौर्बल्ये श्रथयेत्प्रयत्नविषये स्याच्छ्राथयेन्मोक्षणे, यौ तु श्राथयति श्रथत्यपि च वा णौ श्रन्थयेच्छ्रन्थति । सन्दर्भे श्नि विमोचनार्थविषये श्रथ्नात्यथ श्रन्थते, शैथिल्ये**

'शाख कृप श्रथ दौर्बल्ये' कथादय । 'श्रथ प्रयत्ने' इति **मैत्रेयरक्षित**[2] । प्रतिहृष इति बहव । 'श्रथ मोक्षणे,' 'श्रथ हिंसायाम्' इत्यपरे । तथा च 'श्रथ क्रथ हिसु हिंसायाम्' इति **शाकटायन** । 'श्रन्थ ग्रन्थ सन्दर्भे' 'ग्रन्थ विमोचनप्रतिहृषयो ।' ये तु 'श्र थ ग्रन्थ सन्दर्भे' इत्यपि क्र्यादौ पठन्ति । तथा च 'सन्दर्भे श्रन्थनक्रियाया श्रन्थ ग्रन्थ धातू वर्तेते' इति **क्षीरस्वामी**[3] । तेषा **सदर्भे** इत्येतद् यथाश्रुत श्रथ्नातीत्यनेनैव सम्बन्धनीयम् । "**वा णौ**" इत्यनेनैव पूर्वधातोरवच्छेद सिद्ध । श्रथि शैथिल्ये ।

**ऽथ पथेर्गतौ पथति णौ पन्थेर्गतौ पन्थयेत् ॥ १०१ ॥**

'**पथे** गतौ ।' एव च '**पथेगतौ** इत्यत्रापि काममस्यैवैकारस्य पूर्वरूपम्[4] । तत्फल पुनरपथीदित्यत्र 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' (अष्टा० ७।२।५) इति वृद्ध्यभावससूचनम् । पथि गतौ ॥

---

१ क्षीरतरङ्गिणी, धातुसूत्र १०।८०॥ २ द्र० धातुप्रदीप १०।१३, पृष्ठ १३२ । तत्र 'प्रतियत्ने इति पाठ । ३ क्षीरतरङ्गिण्या तु क्र्यादौ नाय पाठ उपलभ्यते, न च तत्र 'श्रन्थ ग्रन्थ सन्दर्भे' इत्येव धातुसूत्रमुपलभ्यते । भ्वादौ पुन क्षीरस्वामी स्वयमाह— क्र्यादौ श्रन्थ ग्रन्थ सन्दर्भे (क्षीर० १।३० )। विशेषस्त्वत्र अस्मत्सम्पादिताया क्षीरतरङ्गिण्या २७३ तमे पृष्ठे पञ्चमटिप्पण्या द्रष्टव्य । ४ अय भाव — पथे' एकारा तानुकरणाङ्सो ऽकारस्य 'ङसिङसोश्च' (अष्टा० ६।१।११० ) इति पूर्वरूपम् । 'तत्फलम्' एकारान्तानुकरणफलम् ।

**क्लिन्दते क्लिन्दतीत्येवमिदित परिदेवने ।**
**क्लिद्यतीत्याद्रभावेऽर्थे क्लिदे श्यन्यूदितो भवेत् ॥ १०२ ॥**

'क्लिदि परिदेवने'। अकत्रभिप्राये कत्रभिप्राये च क्रियाफले द्वैरूप्यार्थो द्विष्पाठ । एवञ्च इदितो परिदेवने' इति पठितु युक्तम्[1] । 'क्लिदू आर्द्रीभावे'। ऊदित्त्वफल तु क्लेत्ता क्लेदिता। इत्यादौ 'स्वरतिसूतिसूयति' ( अष्टा० ७।२।४४ ) इतीड्विकल्प, न पुन पाठशुद्ध्या पदशुद्धिरेव । वक्ष्यति च 'इटा भिदा'[2] इति ॥

**आस्वादनेऽर्थे स्वदते स्वादयेदिति शब्णिचो ।**

'ष्वद ष्वद आस्वादने,' अनुदात्तेतौ । 'ष्वद आस्वादने'। विस्तृतश्चाय[3] 'भाषार्थे यौ तु लोकयेद्'[4] इत्यत्र । यस्तु 'स्वाद आस्वादने' इत्येव भूवादावपि पठचते, तस्य तङि स्वादते इति द्रष्टव्यम् ॥

**अर्दयेदर्दतेऽर्द्द्यौ हिसनेऽर्दति याचने ॥ १०३ ॥**

'अर्द हिसि हिसायाम्'। आद्य स्वरितेत्। **शाकटायनस्य** त्वात्मनेपदो। 'अर्द गतौ याचने च' ॥

**मेदते मेद्यतीत्येते स्नेहने मिन्दयेण्णिचि ।**
**ञिदितो मेदते मेदेन्मेधाहिसनयोर्द्वयो ॥ १०४ ॥**

'ञिमिदा स्नेहने,' भूवादिर्दिवादिश्च। 'मिदेर्गुण' ( अष्टा० ७।३।८२ ) इति गुण । 'मिदि स्नेहने'। **क्षीरस्वामी** तु 'मिद स्नेहने, मेदयती' त्युक्त्वा 'कैश्चिदिदित् पठचते'[5] इत्याह । 'मिदृ मेदृ

१ क्लिदि परिदेवने इत्येव द्वौ धातू । एक आत्मनेपदी ( द्र० क्षीर० १।१५ ) अपर परस्मपदी ( द्र० क्षीर० १।५० ) । तस्माद् धातुद्वयकारणात् 'इदितो' इति द्विवचनान्तो निर्देश कर्तव्य ।

२ दैवश्लोक ११६ ।

३ 'विवृतश्च इति युक्त पाठ स्यात् ।

४ दैवश्लोक ४० ।

५ क्षीरतरङ्गिण्या तु 'मिदि स्नेहने । मि दयति । मि द कुष्ठी । मिद इति कौशिक, मेदयति' इत्य यथा पाठ उपलभ्यते ( द्र० १०।८, पृष्ठ २७६ ) सायणस्तु 'क्षीरस्वामी अनिदित पठित्वा कश्चिदिदित् पठचते' इत्येव धातुवृत्तौ ( पृष्ठ ३७६ ) उदाजहार ।

मेधाहिंसनयो'। थान्तावेतावित्येके। व्यक्त चैतत् क्षीरस्वामिवृत्तौ[१]। धान्तावपरे। तथा च 'षिद्भिदादिभ्योऽङ्' (अष्टा० ३।३।१०४) इत्यत्र मेधाशब्दव्युत्पादने जिनेन्द्र पपाठ। भोजदेवस्तु 'रिखिलिखिशुभिसिधिमिधिगुधिभ्यो गुणश्च'[२] इत्यङ्विधौ मिधेर्गुणं च विदधद् मेधि नानुमन्यते। कौमाराश्चात्रैवानुकूला। तत्र च रिखि सौत्रो लिरयर्थं। सेधा सत्त्वम्। गोधा प्रकोष्ठत्राणम्। शिष्ट स्पष्टम्। सवथापि 'प्रत्येक निदिनेद्यो स्ता नेदते नेदतीत्युभे'[३] इत्येवात्राप्युभयविवक्षायामृदितोरिति[४] युक्त पठितुम्। 'इदित परिदेवने'[५] इत्यत्रेव वा जात्याख्यायामेकवचनम्। ऋदित्त्वफल तु 'णौ चङ्युपधाया ह्रस्व' (अष्टा० ७ ४।१) इति ह्रस्वेनामीमिददिति प्राप्ते 'नाग्लोपिशास्वृदिताम्' (अष्टा० ७।४।२) इति निषेधादमिमेददिति रूपम् ॥

**आह्वाने रोदने क्रन्दे कन्दे क्रन्दति कन्दति।**
**वैक्लव्ये तु तयोर्धात्वो क्रन्दते कन्दते मितो ॥१०५॥**

'कदि क्रदि क्लदि आह्वाने रोदने च'[६]। 'कदि क्रदि क्रद क्लद वैक्लव्ये'। क्षीरस्वामी तु 'कदि क्रदि क्लदि वैक्लव्ये' इत्युक्त्वा 'वैकल्य' इति चन्द्र। कद क्रद क्लदेति नन्दी'[७] इत्याह। सवथाऽपि क्लन्द्यादेरपि क्लन्दतीत्यादि यथाहमूह्यम् ॥

अथ मितोरिति किमथम्? नहि तावद्ध्रस्वार्थम्। 'नुम्विधावुपदेशिवद् वचनम्' इति वार्त्तिकाद्[८] इदितो नुम् धातो'

१ क्षीरतरङ्गिण्या १।६१० तमे धातुसूत्रे। २ सरस्वतीकण्ठाभरण २।४।१४४॥ ३ दैवश्लोक ११८। ४ मिदृ मेदृ द्वयोर्धात्वो सत्त्वादत्रापि 'ऋदितो' इति पाठो युक्त इति भाव। पूर्वं ७३ तमे पृष्ठे प्रथमा टिप्पण्यपि द्रष्टव्या। ५ दैवश्लोक १०२। ६ एव च न श्लोके यथासख्य विवक्षितमिति ज्ञेयम्। ७ क्षीरतरङ्गिणी १।५२०, पृष्ठ १०७। ८ महा० ७।१।५८॥

( अष्टा० ७।१।५८ ) इति धातुग्रहणबलादेव[1] वा धातुसञ्ज्ञासमनन्तरमेव नुमि कृतेऽकारस्यानुपधात्वेन 'अत उपधायाः' ( अष्टा० ७।२।११६ ) इति वृद्धेरभावाद्ध्रस्वविधेर्वैयर्थ्यात् । नच 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (अष्टा० ६।४।९३) इति दीर्घार्थं, ऊदुपधाया गोहः' ( अष्टा० ६।४।८९ ) इत्यत उपधाया इत्यत्रानुवृत्तेरुपधाया एव मिता ह्रस्वदीर्घयोर्विधानाद्, अत्र चानुपधात्वात् । न च घटादिपाठबलादनुपधात्वेऽपि दीर्घं सिध्यति, षित्त्वार्थतयाऽपि पाठोपपत्तेरित्यत आह—

**मित्त्वार्थपाठसामर्थ्यात् तयोर्दीर्घविकल्पनम् ।**
**भवेच्चिण्णमुलोस्तस्मादक्रान्द्यक्रन्दि सिध्यतः ॥१०६॥**

षित्त्वं खल्वङि कन्दा क्रन्देति रूपार्थम् । तयोश्च 'गुरोश्च हलः' ( अष्टा० ३।३।१०३ ) इत्यप्रत्ययेनैव सिद्धेर्मित्त्वार्थ एवायं पाठ इति तद्बलादनुपधात्वेऽपि अक्रान्दि अक्रन्दि क्रान्दं क्रन्दम् अकान्दि अकन्दि कान्दं कन्दमिति वैकल्पिको दीर्घः सिध्यतीत्यर्थः । एवं क्लन्देरप्यूह्यम् ॥

**गात्रप्रक्षरणे स्विद्येत् स्वेदते स्नेहमोकयोः[2] ।**

'ष्विदा गात्रप्रक्षरणे' दिवादिः । तथा च 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' ( अष्टा० १।२।१९ ) इत्यत्र **हरदत्तः**—'ञिष्विदा स्नेहनमोचनयोरित्यस्य भौवादिकस्य ञीतो ग्रहणम् । न तु ष्विदा गात्र

---

१ अयं भावः-इदितो नुम् धातोः ( ७।१।५८ ) सूत्रे धातुग्रहणाभावे तासिसिचोरिदित्वात्तदङ्गस्य नुम्प्रसज्येत । तदभावे च मन्ता अमस्त इत्यत्र अनिदितां हल उपधायाः क्ङिति ( ६।४।२४ ) इति नलोपः प्रसज्येत । भाष्यकारस्तु 'यच्चात्रेकारेण क्रियते ऽकारेणापि तच्छक्यं कर्तुम्' ( महा० ७।१।५८ ) इति वदन् तासिसिचोरिकारकरणमुच्चरणार्थं मनुते । मन्ता इत्यत्र तु डानिमित्तस्य टिलोपस्याभाच्छास्त्रीयत्वात् असिद्धवदत्राभात् (६।४।२२) इत्यसिद्धत्वान्न लोपो न भविष्यति । अमस्त इत्यत्र तु आहसाताम् इत्यत्र हनेर्नकारलोपार्थं हनः सिच् ( १।२।१४ ) इति सिचः कित्त्वविधानज्ञापकादनुनासिकलोपाभावो द्रष्टव्यः ।   २ 'मोक्षयोः' पाठान्तरम् ।

प्रक्षरणे इत्यस्य दैवादिकस्य, ञीद्भि साहचर्यात् । अस्य चाञीत्त्वाद्' इति । ञिष्विदा स्नेहनमोचनयो , अनुदात्तेत् । क्षीरस्वामी तु ञिक्ष्विदा' इति क्षकारादि पठित्वाह—'ञिष्विदा इति नन्दी'[1] इति ॥

**क्ष्वेदत्यव्यक्तशब्दार्थे क्ष्विद्यति स्नेहमोक्षयो ॥ १०७ ॥**

'ञिक्ष्विदा अव्यक्ते शब्दे', 'ञिक्ष्विदा स्नेहनमोचनयो', दिवादि । मोहनयोरित्यपि बहुषु ग्रन्थेषु दृश्यते ॥

**ज्वलादेश्च तुदादेश्च सीदेद् विशरणादिके ।**
**पद्यतेरर्थ आसीदेदासादयति चाडि णौ ॥ १०८ ॥**

'षद्लृ विशरणगत्यवसादनेषु । तुदादावप्येवमेव **धनपाल** । 'विशरणे' इत्येव **मैत्रेयरक्षितो**[2] **दुर्गश्च** । 'विशमृशणुदप्रवेशामशक्षेपेषु षद्लृविशरणार्थं इति च **श्लोकधातुपाठ** । अवसादने' इत्येव **क्षीरस्वामि**[3]**शाकटायनौ** । अत्र च ज्वलादित्वात् सीदतीत्यर्थे साद इति पक्षे ण । अन्यदा सद इति पचाद्यजेव । तुदादित्वफल तु स्वरभेदनुविकल्पौ [4]पूर्वोक्तावेव च द्रष्टव्यौ । 'आङ षद पद्यर्थे' । आङ पर षद धातु पदेरर्थे गतावन्यत्रापि यथाप्रयोग विकल्पेन णिचमुत्पादयति इत्यर्थ । आङीति चाङ्युपपदे । तत्र चासीदेदित्यन्याय्य मन्यामहे । शदिसहचरितयोर्ज्वलादितुदाद्योरेव सद्यो सीदादेशस्य न्याय्यत्वात् । तथा च तद्विधौ तावेव **न्यासकृता** पठितौ—'षद्लृ विशरणगत्यवसादनेष्विति भौवादिक, षद्लृ विशरणे तौदादिक ' इति ॥

**व्यक्तवाचि वदेद्वा णौ वादयेद् वदते वदेत् ।**
**सन्देशे**

---

१ क्षीरतरङ्गिणी १।४९३, पृष्ठ १०१॥ २ धातुप्रदीप ६।१५३, पृष्ठ ११६ ।

३ क्षीरतरङ्गिण्यां तु तुदादौ 'षद्ल विशरणगत्यवसादनेषु' ( ६।१३२ ) इत्येव पाठ उपलभ्यते । ४ द्र० 'शतुर्वा नु शे स्यादिति तुदादिता' ( दैवश्लोक ५७ ) व्याख्यानोक्त ( पूव पृष्ठ ४९ ) ।

'वद व्यक्तायां वाचि', 'वद सन्देशे', स्वरितेत् । **शाकटायनस्य** त्वात्मनेपदी । यदाह—'वदि[1] सन्देशवचने' इति । **धनपालस्तु** 'पद[2] सन्देशवचने, पादयति पदति, अन्यत्र पदयते' इति । 'वदि अभिवादनस्तुत्योरित्यस्य च वन्दत इति द्रष्टव्यम् ॥

**श्यनि गत्यर्थे पद्यते पदयेत णौ ॥ १०९ ॥**

'पद्लृ गतौ' दिवादि कथादिश्च, आगर्वादित्वात् तङ् ॥

**णौ देवशब्दे गदयेद् व्यक्तिवाचि गदेच्छपि ।**

'स्तनगदी देवशब्दे, स च पर्जन्यध्वनि । स्तनश्च गदिश्च स्तनगदी इत्यदन्तोपदेश एव गदि । 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ'[3] इतीक्प्रत्ययं कृत्वा 'अतो लोप' ( अष्टा० ६।४।४८ ) इत्यल्लोपेनात्र निर्दिश्यत इत्याहु । स्तन गद इत्येव **चन्द्र** । **केचित्तु** गदिमीदितमेवेच्छन्त कथादिकाण्डपाठबलादेवादन्तत्व कल्पयन्ति । तथा च स्तन गदै इति **शाकटायन** । तन्मते तु 'कथादिपाति'[4] इत्यक् । गद व्यक्तायां वाचि ।

**नदत्यव्यक्तशब्दार्थे भाषार्थे नादयेदिति ॥ ११० ॥**

'णद अव्यक्ते शब्दे', 'णद भाषार्थे' । टुनदि इत्यस्य नन्दतीति द्रष्टव्यम् ॥

**सत्तायां विद्यते, ज्ञाने वेत्ति, विन्ते विचारणे ।**
**विन्दते विन्दतीत्येव लाभे वेदयते णिचि ॥ १११ ॥**

विद सत्तायाम्', दिवादिरनुदात्तेत् । 'विद ज्ञाने', अदादि । 'विद विचारणे', रुधादि । विद्लृ लाभे', मुचादि । इरित्पाठ[5] पुन प्रामादिक । तथा च सर्वलुङि अविददिति नित्य एवाङ्

---

१ शाकटायनस्य इदित्व स्वरितेतश्चिह्नम ( द्र० शाक० १।४।६६ ) ।

२ अस्मिन् वाक्ये 'पद 'पादयति' 'पदति' 'पदयते' स्थाने वद 'वादयति' 'वदति' 'वादयति' एते पाठभेदा यथासख्यम् ।		३ महा० ३।३।१०८॥

४ शाक० ४।१।१९७॥ लज-धातुप्रसगे विवृतमेतत् सूत्रम द्र० पृष्ठ ५५ ।

५ तुदाद्य तगतमुचादिस्थस्य लाभार्थकस्य विद इति भाव ।

उदाजह्रे । 'विद चेतनाख्याननिवासेषु' चितादि । निपातनेष्विति **धनपालशाकटायनौ** ॥

**दैन्येऽर्थे खिद्यते खिन्ते, परिघाते तु खिन्दति ।**

'खिद दैन्ये', दिवादौ रुधादिश्च । 'खिद परिघाते' मुचादि । 'परितापे परितापनक्रियाया'मिति **क्षीरस्वामी**[१] ॥

**स्तुत्यादौ मन्दते हर्षे माद्येन्मादयते णिचि ॥११२॥**

'मदि स्तुतिमोदमदस्वप्नगतिषु' । अत्र **क्षीरस्वामी**—"स्वप्नेनालस्य लक्ष्यते । **चन्द्रस्तु** मदि जाड्ये इत्येवाह'[२] इति । 'मदी हर्षे' । शमामष्टाना [दीर्घः श्यनि] ( अष्टा० ७।३।७४ ) इति दीघ । 'मद तृप्तियोग' चितादि । तप्तिशोधन **इत्यन्ये** । तथा च 'तृप्तिशोधने तर्पणशुद्धौ' इति **क्षीरस्वामी**[३] । हृषयति ग्लपयति वेत्याद्यर्थे तु मदयति मदयते इति भवति । मदी हर्षग्लपनयो' इति **घटादौ** पठ्यते । अत्रार्थे माद्यतिर्मित् स्यादित्यथ ॥

**यौ[४] वा णावपवारणे छदत इत्येक द्वितीय छदेद्,**

**अन्यच्छादयतिच्छदेदिति पुन स्यादूर्जनेऽर्थे मित ।**

**यत्तुच्छन्दयतीति णौ नुमि पद तत् सवृताविष्यते,**

'छद अपवारणे', स्वरितेत् । **शाकटायनस्य** तु परस्मैपदी । छदिरूर्जने, घटादि । तच्च बलन प्राणन वा । अत्र च 'धात्वन्तराभ्युपगमे दरतीत्येके'[५] इत्यादिपूर्वोक्तरीत्यनुसारेण छदेदित्युक्तम् । **क्षीरस्वामिमैत्रेयरक्षितौ** तु 'छद अपवारणे' इति यौजादिकस्यैवच्छदेरूर्जने छदयतीति मित्त्वार्थो घटादौ पाठ इत्याहतु[६] । 'छदि सवरणे',

---

१ क्षीरतरङ्गिण्या 'खिद परितापे' ( ६।१४१ ) इत्यत्र पाठोऽय नोपलभ्यते ।

२ क्षीरतरङ्गिणी १।१३, पृष्ठ १५ । तत्र 'आलस्यमपि लक्ष्यते' इति पाठः ।

३ क्षीरतरङ्गिण्या ( १०।१५१ ) नोपलभ्यतेऽय पाठ । तत्र शोधन सम्पत्ति' इत्येव पाठ । ४ यौ युजादावित्यथ । ५ षट्त्रिंशच्छ्लोकव्याख्यान उक्तमेतत् ( पृष्ठ ३७ ) । ६ द्र० क्षीरतरङ्गिणी १।५५०।। क्षीरस्वामिनो युजादौ 'सवरणे' इति पाठ ( द्र० क्षीर० १०।२८५ ) । धातुप्रदीप १।८१८, पृष्ठ ५८ ।

छदेति तु बह्व । 'उरश्छदो दन्तच्छद' इत्युदाजहार च **क्षीरस्वामी**[1] । **शाकटायन** पुनरात्मनेपदिष्वमु पपाठ ॥

**ससर्गे णिचि मोदयेदिति भवेद्धर्षे पुनर्मोदते ॥ ११३ ॥**

मुद ससर्गे' । 'मुद हर्षे', अनुदात्तेत् ॥

**प्रत्येक निदिनेद्यो स्ता नेदते नेदतीत्युभे ।**

**कुत्साया सन्निकर्षे वा कुत्सामात्रे तु निन्दति ॥ ११४ ॥**

णिद्द णेद्द कुत्सासन्निकषयो' । रूपभेदस्तु निनिदे निनेदे इत्यादौ व्यक्त । णिदि कुत्सायाम् ॥

**छृदी सन्दीपने वा णौ छर्दयेच्छदतीत्युभे ।**

**छृन्ते छृणत्तीति पदे दीप्तिदेवनयो श्नमि ॥ ११५ ॥**

छदी स्थाने छृदेति **धनपालशाकटायनौ** । तत्र चाद्ये छृण्णम्,[2] अन्त्ये छृदितमिति फलभेद । **क्षीरस्वामिनस्तु** पकारान्तोऽयम् । यदाह—'चृप छृप तृप दृप सन्दीपने । सदीप्तिक्रियाया चृपादयश्चत्वारो धातवो वर्तन्ते । चर्पयति छपयति'[3] इत्यादि । 'उच्छृदिर् दीप्तिदेवनयो' ॥

**सिधेः सिध्यति सराद्धौ सेधतीत्युदितो गतौ ।**

**शास्त्रमाङ्गल्ययो रूपमूदितस्तदिटा भिदा ॥ ११६ ॥**

'सिधु सराद्धौ,' षिधु गत्याम् । एवमेव च बह्व । **न्यासे** तु 'एकाच उपदेशेऽनुदात्तात्' ( अष्टा० ७।२।१० ) इत्यत्र 'अस्योदित्त्वमनाषम्' इति स्थितम् । तत्र चोदित्त्वे 'उदितो वा' (अष्टा० ७।२।५६) इति क्त्वायामिड्विकल्पात् सिद्ध्वा सिधित्वा सेधित्वेति भवति । अनुदित्त्वे तु स्वत प्राप्तनित्येट्त्वमेवावतिष्ठते इति सिद्ध्वेति न

१ क्षीरतरङ्गिणी १०।३६, पृष्ठ २८३ । २ ईदित्त्वात् 'श्वीदितो निष्ठायाम्' ( ७।२।१४ ) इतीण्निषेध । ३ चीरतरङ्गिण्या (१०।२१३) नाय पाठ उपलभ्यते । सायणोऽपि धातुवृत्तौ ( पृष्ठ ३९५ ) पुरुषकारवदेव चीरस्वामिन पाठमुद्धरति ।

भवति । अत्र च 'रलोव्युपधाद्धलादे सश्च' (अष्टा० १।२।२६) इति किद्वद्भावविकल्पात् पक्षे गुण । 'षिधू शास्त्रे माङ्गल्ये च' । 'शासन शास्त्रमि'ति मत्रेयरक्षित[1] शाकटायनश्च । षिधू शिष्टौ इत्येव च चन्द्र । 'शास्त्र शास्त्रविषय शासनम् । माङ्गल्य मङ्गलविषया क्रिया' इति क्षीरस्वामी[2] । शासनाद्धि शास्त्रमिति शास्त्रविषयक्रियापि शासनमेवेत्याशय । तदिति सेधतीत्येतदेवेत्यथ । इटा भिदेति सेद्धा सेधितेत्यादौ 'स्वरतिसूति' (अष्टा० ७।२।४४) इतीड्विकल्पेनास्य पूर्वस्मात् सिधेर्भेद इत्यथ ॥

**शुन्धयेच्छुन्धते शुन्धेर्ग्रौ वा णौ शौचकर्मणि ।**
**शुद्धौ शुन्धति भूवादे शुधे शौचे तु शुध्यति ॥ ११७ ॥**

'शुन्ध शौच कर्मणि,' स्वरितेत् । शाकटायनस्य त्वात्मनेपदी । 'शुन्ध शुद्धौ,' 'शुध शौचे' दिवादि ॥

**शर्धते शब्दकुत्सायामुन्दे शर्धति शर्धते ।**
**हिक्कादौ शधयत्यस्य शृधे प्रसहने णिचि ॥ ११८ ॥**

'शृधु शब्दकुत्सायाम्' । सा च पायुशब्दत्वादिति क्षीरस्वामी[3] । 'शृधु मृधु उन्दे' । स च क्लेद । हिक्कादित्व पुनरुभयपदित्वे हेतु । भूवादौ 'हिक्क अव्यक्ते शब्दे'[4] इत्यारभ्य केचित् स्वरितेत पठचन्ते । तेषु चाय शृधि । 'शृधु प्रसहने' ॥

**बुध्यते बोधतीत्येव बुधेरवगमे द्वयम् ।**
**बुधिरो बोधनार्थस्य बोधते बोधतीत्यपि ॥ ११९ ॥**

'बुध अवगमने' दिवादिर्भूवादिश्च । 'बुधिर् बोधने' । क्षीरस्वामी तु 'बुध' इति पठित्वा 'बुधिरिति नन्दी'[5] इत्याह ॥

**बध्नाति बन्धने बन्धेर्बाधयेदिति सप्तमे ।**

---

१ धातुप्रदीप १।४७, पृष्ठ १३ ।
२ क्षीरतरङ्गिणी १।३९, पृष्ठ २३ ।
३ द्र० क्षीरतरङ्गिणी १।५०६ ।
४ क्षीर० धातुसूत्र १।६०४ । तत्र शृधि ६१३ सूत्रे पठचते ।
५ क्षीरतरङ्गिणी १।६१४, पृष्ठ १२५ ।

यस्तु बीभत्सते तत् स्याद् वैरूप्येऽर्थे बधे सनि ॥१२०॥

अपरे पुन पठन्ति—

[ बध्नन् बीभत्सते बन्धे बाधयेदिति सयमे । ]

'बन्ध बन्धने', क्र्यादि । 'बध सयमने' । 'बध बन्धने' । 'गुप्तिजकिद्भ्य सन्' ( अष्टा० ३।१।५ ) 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (अष्टा० ३।१।६) इति सन् । अभ्यासेकारस्य च 'सन्यत' ( अष्टा० ७।४।७५ ) इति कृतस्य दीर्घ । सश्चास्माद् वैरूप्ये इष्यत इत्याहु[1] । तच्च बीभत्सैव । एव च बन्धे इत्यपि बन्धे पठितस्येत्यथ । अत्र च सन्नन्तस्याप्यवयवद्वारानुदात्तेत्त्वादात्मनेपदम् । तद्वारा हि समुदाय एव गवादाविव लिङ्गमासज्यते । गुपादीना त्रिमुनिसम्मतेन नित्यसन्नन्तत्वेन केवलेषु 'गोपते' इत्यादेस्तत्फलस्याभावात् जुगुप्सादेश्च समुदायस्यानुपदेशात्[2] । न च नित्यसन्नन्तत्वे वृत्त्युक्त गोपायतित्वादि न सिध्येत् । यथासम्भव प्रकृत्यन्तरात् स्वार्थणिजादिना तत्सिद्धे[3] । व्यक्त चैतत् 'पूर्ववत्सन' (अष्टा० १।३।६२) इत्यत्र भागवृत्तौ ।

गुधेर्गुध्नाति रोषेऽर्थे गुध्येत्तु परिवेष्टने ।

'गुध रोषे', क्र्यादि । 'गुध परिवेष्टने', दिवादि ॥

रुन्धे रुणद्ध्यावरणे कामेऽनावनुरुध्यते ॥१२१॥

'रुधिर् आवरणे', 'अनौ रुध कामे' दिवादि, अनुदात्तेत् । अनावित्यन्वित्युपसर्गे सति ॥

राध्नोति ससिद्ध्यर्थे श्नौ राध्येद् वृद्धावकर्मकात् ।

'राध साध ससिद्धौ' । 'राधोऽकर्मकाद् वृद्धावेव'[4] ।

---

१ द्र० काशिका ३।१।६॥ २ द्र० महाभाष्य ३।१।५॥

३ पट पुट आदिदण्डके ( १०।१६७ ) पठिनाद् 'गुप्' इत्यस्माद् 'गोपायति' रूप सेत्स्यतीति भाव । ४ उपरिष्टादुद्धृतभाष्यवृत्तिग्रन्थसामञ्जस्याय 'राधोऽकमकाद् वृद्धावेव' इति धातुसूत्रमन्यथा व्याख्यायति ।

राधेरकमकाच्छ्यन् इत्येतावानेवात्र विवक्षितोऽर्थः। वृद्धिग्रहणन्त्व-कर्मकक्रियोदाहरणमात्रम्। एवकारश्चैवमर्थात् सिद्धाया व्यावृत्तेर-नुवादमात्रम्। तथा च 'कमवत् कर्मणा तुल्यक्रिय' (अष्टा० ३।१।८७) इत्यत्र भाष्यम 'राध्यत्योदन स्वयमेव' इति। अत्र हि सिध्यतीत्यथ, न तु नदी राध्यतीतिवद् वर्धत इति। तथैव 'राधीक्ष्योर्यस्य विप्रश्न' ( अष्टा० १।४।३० ) इत्यत्र वृत्ति — देवदत्ताय राध्यति नैमित्तिक पृष्ट सन् देवदत्तस्य दैव पर्यालोचयतीत्यथ' इति।

**ऋध्नोतीति भवेद् वृद्धावृध्यतीत्यत्र तु श्यनि ॥ १२२ ॥**

'ऋधु वृद्धौ।' आद्य स्वादि ।

**गृधेर्गृध्यति काङ्क्षाया गर्धेस्तत्रैव गर्धयेत् ।**

'गधु अभिकाङ्क्षायाम्,' दिवादि । 'गध अभिकाङ्क्षायाम्' ॥

**छेदने पूरणे चार्थे वर्धेर्वर्धयतीति णौ ॥ १२३ ॥**

**तदेव रूप भाषार्थे वृधेर्वृद्धौ तु वर्धते ।**

'वध छदेनपूरणयो'। 'वृधु भाषार्थ'। 'वृधु वृद्धौ,' अनुदात्तेत् ॥

**याचने वनुते शब्दे सम्भक्तौ च वनेदिति ॥ १२४ ॥**

**क्रियासामान्यवृत्तेश्च तदेव स्यात् पद मित ।**

'वनु याचने,' तनादि । 'वनोति वनुत वन्वन्ति। ववान ववनतु ववनुरिति चान्द्रा उदाहरन्ति' इति ब्रुवन् मैत्रेयरक्षित[१] परस्मैपदिनञ्चैन मेने। 'ष्टन वन शब्दे'। 'वन षण सम्भक्तौ'। 'अर्थभेदाद् द्विष्पाठ' इति मैत्रेयरक्षित[२]। 'ष्टन ध्वने'ति तु क्षीरस्वामी[३]। 'कगे नोच्यते, वनु च नोच्यते। 'अस्यायमर्थ इति नोच्यते, क्रियासामान्यमस्याथ' इति यावत्। 'इह शास्त्रे नोच्यते इत्येके' इति मैत्रेयरक्षित[४]। शास्त्रान्तरात् प्रयोगोऽस्यावगन्तव्य

१ द्र० धातुप्रदीप ६।८, पृष्ठ १२३। स्वल्प पाठभेदस्तत्र।

२ 'अथभेदात् पुन पठ्यते' इति धातुप्रदीपे (१।४६२, ४६३, पृष्ठ ३८) पाठ ।

३ क्षीर० १।३१०, पृष्ठ ७०। तत्र ष्टनस्थाने स्तन पाठः।

४ धातुप्रदीप १।७९५, पृष्ठ ५६।

इति यावत् । **क्षीरस्वामी** तु 'अस्यायमर्थ इति नोच्यते, अनेकार्थत्वात्, नोच्यत इति योऽर्थस्तत्रार्थे कगिरित्येके'[1] इति । अन्त्ये तु स एवाह—'क्रियासामान्यवाचित्वान्नोच्यते'[2] इति । **मित** इति । एतच्च मित्त्वमनुपसर्गस्य विकल्प्यते, सोपसर्गस्य तु नित्यम् । वानयति वनयतीति । यदाह— ज्वलह्वलह्मलानामनुपसर्गाद्वा, ग्लास्नावनुवमां च'[3] इति । एषामनुपसर्गाणां मित्त्वं वा भवतीत्यर्थः । एतच्च 'अनन्तरस्य विधिर्वा भवति' इति न्यायान्न[4] वनोते[5] । **धनपालस्तु** तमेव[6] प्रस्तुत्याह– 'वनु घटादिषु पठन्ति **द्रमिडाः** । तेषां [नित्यं] मित् संज्ञा । वनयति । **आर्यास्तु** विभाषामित्त्वमिच्छन्ति । तेषां वानयति वनयति' इति ॥

**स्तम्भे मानयते ज्ञाने मन्यते मनुते पदम् ॥ १२५ ॥**
**पूजायां मानयेन्मानेद् यौ मीमांसेत तङ्सनौ ।**

'मन स्तम्भे' चितादि । 'मन ज्ञाने', दिवादि । 'मनु अवबोधने', तनादि । 'मान पूजायाम्' । भूवादौ स्वयमनुदात्तेत् । 'मान्बधे'ति ( अष्टा० ३।१।६ ) सनि 'अवयवे कृतं लिङ्गम्' इति न्यायेन तङ् । सश्चास्मात् जिज्ञासार्थादित्याहु[7] । विचारणार्थादिति तु **भोजीयाः**[8] **मीमांसकाश्च** । 'मीमांसा स्याद् विचारणा' इति च **नैघण्टुकाः**[9] । एवं च जिज्ञासाशब्देनापि वा विचारणैव लक्ष्यताम् ॥

---

१ क्षीरतरङ्गिणी १।५३५, पृष्ठ १०९ । काशकृत्स्नीये धातुपाठे तु 'कगे गतौ' इति पाठ उपलभ्यते ( पृष्ठ १३९ ) । २ क्षीरतरङ्गिणी १।५४१, पृष्ठ ११० । ३ क्षीर० धातुसूत्र १।५५५,५५६ ।
४ परिभाषावृत्ति ५० । ५ न तानादिकस्य, किं तु घटादौ प्राक्पठितस्येत्यर्थः । अत्राह गणपतिशास्त्री—'घटादिपठितश्चोदितकरणसामर्थ्यादन्यो धातुः, न तानादिकानुवादः' इति तच्चिन्त्यम् तानादिकस्याप्युदित्त्वादनकान्तिकस्तस्य हेतुः । ६ तमेव तानादिकमेवेति भावः ।
७ द्र० काशिका ३।१।६।। ८ 'मानेर्विचारणायाम्' इति भोजीयं सूत्रम् ( सरस्वतीकण्ठा० १।३।५ ) । ९ अनुपलब्धमूलोऽयम् । 'मीमांसा तु विचारणा' इति हैमाभिधानचिन्तामणि २।१६५ ।

**ध्वनयेदित्यदन्तस्य ध्वने शब्दे ध्वनेच्छपि ॥ १२६ ॥**

घटादौ चाय **केश्चित्** पठ्यते । तथा च 'ध्वन शब्दे इत्येके' इति **मैत्रेयरक्षित**[1] । **क्षीरस्वामी**[2]**धनपाला**वप्यत्रैवानुकूलौ । 'दलिवलिस्खलिरणिध्वनिक्षपित्रपयश्च' इति च **भोजदेव** । एते च मित्सञ्ज्ञा इत्यर्थ ॥

**शब्दे च देवशब्दे च स्तनति स्तनयेत् क्रमात् ।**

'ष्टन वन शब्दे' । 'स्तनगदी देवशब्दे' । न चास्यापि । दन्त्यपरसादित्वात् षोपदेशत्वम् । स्म्याद्येकाच्साहचर्यादनेकाचा नैतदित्याहु । व्यक्त चैतत् **क्षीरस्वामिमैत्रेयरक्षितवृत्त्यो**[3] ॥

**श्रद्धोपकरणार्थस्य तनेस्तनति तानयेत् ॥ १२७ ॥**

**दैर्घ्यार्थस्योपसर्गात्तु विस्तारे तनुतेऽतनोत् ।**

'तनु श्रद्धोपकरणयो । [4]**धनपालशाकटायनौ** । 'उपसर्गाच्च दैर्घ्ये' । उपसर्गात् तनेर्दैर्घ्येऽर्थे णिज्भवतीत्यर्थ । आतनति, आतानयेत् । 'तनु विस्तारे' ॥

**दाने सनोति सनुते सम्भक्तौ तु सनेदिति ॥ १२८ ॥**

'षणु दाने,' तनादि । 'वन षण सम्भक्तौ' ॥

**णौ गोपायति भाषार्थे निन्दायां से जुगुप्सते ।**

**गोपायेद् रक्षणे त्वाये व्याकुलत्वे तु गुप्यति ॥ १२९ ॥**

'गुप भाषार्थ' । 'गुप गोपने' अनुदात्तेत् । गोपनकुत्सनयोरिति

---

१ धातुप्रदीपे तु 'ध्वन स्वन शब्दे । स्वन अवतंसन इत्येके' इति पाठ ( पृष्ठ ५८ ) । धातुवृत्तौ तु 'ध्वन शब्दे' इत्यत्र स्वन इति न पठ्यते ।

२ क्षीरतरङ्गिण्या नाय धातु पठ्यते । भोजदेवीयसूत्रे तु श्रूयते (पृष्ठ ११२)।

३ उभयत्र नतद् विषये किञ्चिदुच्यते ।

४ इत पूव कश्चित् पाठस्त्रुटित । द्विवेदइमसस्करणसस्कर्त्रा गणपतिशर्मणा 'चन श्रद्धोपहननयो ' इत्यशस्य कल्पना कृता । सायणस्तु धातुवृत्तौ 'क्वचित् चन श्रद्धोपहिंसनयोरिति पठ्यते' इत्युक्तम् । वय तु मन्यामहे अत्र 'श्रद्धोपहिंसायामिति' श्रद्धोपहि-

**मैत्रेयरक्षित**[1] । **निन्दायामिति** । अत्र 'गुप्तिज्किद्भ्यः सन्' (अष्टा० ३।१।५) इत्यत्र **जयादित्य**—'निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते' इति । गुपू रक्षणे । 'गुपूधूप' ( अष्टा० ३।१।२८ ) इत्यादिनाय । 'गुप व्याकुलत्वे,' दिवादि ॥

**धूपायतीति सन्तापे भाषार्थे धूपयेदिति ।**

'धूप सन्तापे' । 'धूप भाषार्थे' ॥

**क्षिप्यति प्रेरणे शे तु क्षिपति क्षिपते पदे ॥ १३० ॥**

'क्षिप प्रेरणे' । अत्र भूवादिसूत्रे (अष्टा० १।३।१) **सुधाकर**—"सपृचादि ( अष्टा० ३।२।१४२ ) सूत्रे **पारायणिकै**रनुक्तोऽपि क्षिपिर्दैवादिको **जयादित्ये**नोररीचक्रे 'क्षिप प्रेरणे इति दिवादिस्तुदादिश्च गृह्यते' इति वदता । अत एव **व्यासप्रयोग**—

'द्वाविमावम्भसि क्षिप्य गले बद्ध्वा महाशिलाम् ।
धनिनं चाप्रदातारं दरिद्रं चाप्रवासिनम् ।।'[2]

इति । 'सक्षिप्य सरम्भमसद्विपक्षम्' इति भट्टि[3] । नो खलु पारायणिकैरप्रदर्शनादभावानुमानम्, लक्ष्यपारतन्त्र्येण तेषामवस्थानात् । शिष्टप्रयोगोपगीतनाम्न शब्दराशेरनाश्रयणे प्रधानविरोधाल्लक्षणस्यालक्षणत्व माभूदिति" इति ॥

**सन्तापेऽर्थे तपेद् दाहे तापयेत् तपते तपेत् ।**
**ऐश्वर्ये वा दिवादित्वात् तप्यते तपतीति च ॥ १३१ ॥**

'तप सन्तापे' । 'तप दाहे,' युजादि स्वरितेत् । **शाकटायनस्य** त्वात्मनेपदी । 'तप ऐश्वर्ये वा' । तपेत्यय धातुरैश्वर्ये तङ्श्यनौ वोत्पादयति इत्यर्थ । एवं च दिवादित्वेनैव तदविनाभूत-

---

सनयोरिति' वा अशस्त्रुटित । यत शाकटायनधातुपाठेऽत्र 'तनु श्रद्धोपहिंसायाम्' इति पठ्यते ( धातुसूत्र १२६५ ) ।

१ धातुप्रदीप १।६७८, पृष्ठ ७० ।          २ तु० महा० उद्योगपर्व ३३।६० ॥

३ भट्टि सर्ग २।५२ ॥

मनुदात्तेत्त्वमपि[१] दर्शित द्रष्टव्यम् । पतेत्येके । तथा च 'इरज्यति पत्यते क्षयति राजतीति चत्वार ऐश्वयकर्माण' इति **नैरुक्ता**[२] । **केचित्तु** 'वा' इत्येतत् 'वावृतु वरणे' इत्युत्तरधात्वशमाहु । तथा च 'ततो वावृत्यमाना सा रामशाला न्यविक्षत' इति **भट्टि**[३] । एव च 'णौ वर्तयति भाषार्थे'[४] इत्यत्र 'वरणे श्यनि वृत्येत' इत्यप्यनुक्ति शोभतेतराम् ॥

**आक्रोशे शप्यते शप्येच्छपते शपतीति च ।**
**उपालम्भे शपेर्वाक्यात्तङि स्याच्छपते पदम् ॥ १३२ ॥**

'शप आक्रोशे' दिवादिर्भूवादिश्च । **वाक्यादिति** 'शप उपालम्भने' इति वार्त्तिकेन[५] । उपालम्भ इत्येव तु प्राय पठन्ति । तदात्रापि उपालम्भ इति पाठ । तत्र वाचाशरीरस्पर्शनमुपालम्भ । तच्चैतज्ज्**यादित्यमतम्**[६] । एतच्च 'त्वत्पादौ स्पृशामि नैतन्मया कृतम् इत्येवविध शपथविशेष' इति व्याचख्यु[७] । **सुधाकरश्चाह**—'वाचा शरीरस्पशने तव शरीर स्पृष्ट्वा शपे इति यल्लोकप्रसिद्धतत्र शपेस्तङ्' इति । **कैयटस्तु**—'उपलाम्भन प्रकाशनम्' इति । **भागवृत्तिकार** पुन प्राह—'शपेरुपलम्भने प्रकाशने कथने वतमानादात्मनेपद भवति । देवदत्ताय शपते । देवदत्त यत्किञ्चित् कथयतीत्यर्थ । वाचा शरीरस्पर्शनमुपालम्भनमित्यद कस्यचित् काव्यम्'[८] इति । तत्र च श्लाघह्नुङ्स्थेति ( अष्टा० १।४ ३४ ) सम्प्रदानत्वाच्चतुर्थी । **शाकटायनस्त्वाह**—'उपलाम्भन प्रकाशन

१ अपिशब्देन श्यन्विषयत्वम् । २ निघण्टु २।२१ ॥

३ भट्टि ४।२८ ॥ ४ अय 'वतयेद् भाषणार्थे णौ' इति प्राक ( श्लोक ६६ ) पठितस्यानुवादरूप पाठ , तथाविधपाठस्यानुपलम्भात् ।

५ महा० १।३।२१ इत्यत्र पठितम् । वाक्यशब्देन वार्तिकमुच्यते । अत एव वार्तिकारो वाक्यकारशब्देनापि बहुत्र स्मयते । द्र०स०व्या०शास्त्र का इतिहास, अ० ८ का आरम्भ । ६ द्र० काशिका १।३।२१॥

७ पदमञ्जर्यां हरदत्तमिश्रा । द्र० भाग १, पृष्ठ २३१ ।

८ काव्यशब्देन जयादित्यमतमुपहसति भागवृत्तिकार ।

देवदत्ताय शपते, देवदत्त प्रकाशयति। एवम्भूतोऽसाविति देवदत्त-माचष्टे इत्यर्थ । अथवा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनम् । देवदत्ताय शपते इति। प्रोषिते देवदत्ते तस्य भावाभावयोरुपलब्धव्ययो कञ्चिदासेवते[1] इति। **चान्द्रभोजकौमारास्तु** 'शप शपथे' इत्येवमाहु । तदेतेष्वपि पक्षेषु लक्ष्यवशादेव समस्तस्य व्यवस्थास्थेया ॥

**तृप्नोति तृप्यतीत्येते प्रीणने श्नौ श्यनि क्रमात् ।**
**तृप्नावन्यतरस्या णौ स्याता तर्पति तर्पयेत् ॥ १३३ ॥**

'तृप प्रीणने'। तच्च 'पीयूषस्येह तृप्णुतम्'[2] इत्यादिदर्शनात् तृप्तिरेव। **केचित्** पुन स्वादौ तृपि न पठन्ति। तथा च क्षुभ्नादि' (अष्टा० ८।४।३९) सूत्रे **न्यासकृता** 'व्यत्ययो बहुलम्' (अष्टा० ३।१।८५) इति छान्दसोऽत्र श्नुरुक्त । अत्र च 'क्षुभ्नादिषु च' (अष्टा० ८।४।३९) इति णत्वाभाव । तेषु च तृप्नोतिशब्दस्यैव पाठात् तसादिषु णत्व भवत्येव[3] । अतृप्नोत् तृप्नोत्वित्यत्र तु 'एकदेशविकृत-मनन्यवद् भवति' इति न्यायान्न[4] भवति। तृप तृप्तौ'। तुदादिश्चायम्। 'सन्दीपने' इति तु युजादौ **क्षीरस्वामी**[5] । प्रीणन इति बहव ॥

**सघाते डेपयेतेति क्षेपे डिपति डिप्यति ।**
**डेपयेदिति चत्वारि णिचि शे श्यनि णौ डिपे ॥ १३५ ॥**

---

१ एव च देवदत्तभावाभावा यतरविषय स्वाभिप्रायमाविष्करोतीत्यथ उदाहरणस्य फलित इति गणपतिशास्त्री व्याचक्षते। २ तुलनीयम्—पीयूषस्येह तृप्णुहि। तै० ब्रा० २।४।८॥ ३ गणपाठे 'तृप्नु पठ्यते यथा 'क्षुभ्ना', न तु तप्नोति। तेन यथा क्षुभ्नाते सवत्र णत्वाभाव एव तप्नोतेरपि ज्ञेय । तथा चाह हेमचन्द्रो धातुपारायणे, श्रीगुणरत्नसूरिश्च क्रियारत्नसमुच्चये— 'क्षुभ्नादित्वाण्णत्वाभावे तृप्नोति तृप्नुत तृप्नुवन्ति' इति। तस्मात् पुरुष-कारवचनमिद चिन्त्यम्। वैदिकग्रन्थेषु 'तृप्णुतम् तृप्णुहि' इत्यादिष्वसकृत् णत्वश्रवणात् कदाचिद् भ्रान्त स्यात् पुरुषकार । वय तु म यामहे उभयथा निर्देशाद् उभयेऽपि नत्वणत्वविशिष्टप्रयोगा साधव इति।

४ परिभाषावृत्ति ४२। ५ क्षीरतरङ्गिणी १०।२१३, पृष्ठ २०७।

'डिप सघाते' चितादि । 'डिप क्षेपे' ॥

**कल्पते शपि सामर्थ्ये कल्पयत्यवकल्कने ।**
**अदन्तस्य कृपेर्णौ तु दौर्बल्ये कृपयेदिति ॥ १३५ ॥**

'कृपू सामर्थ्ये' । 'कृपो रो ल' ( अष्टा० ८।२।१८ ) इति ल । 'कृपेश्च' इति 'कृपेस्तादर्थ्ये' इति वा णिच् । ते [ च ] 'भावयत्यवकल्कने'[१] इत्यत्र दर्शिते । 'दार कृप श्रथ दौर्बल्ये' ॥

**क्षम्पे क्षम्पयति क्षान्त्या प्रेरणे क्षपयेदिति ।**

'क्षपि क्षान्त्याम्' । 'क्षप प्रेरणे' । भीमसेनेन कथादिष्वपठितोऽप्यय 'बहुलमेतन्निदशनम्' इत्युदाहरणत्वेन धातुवृत्तौ[२] पठ्यते ॥

**दिवादे कुप्यति क्रोधे भाषार्थे कोपयेत् कुपे ॥ १३६ ॥**

'कुप क्रोधे' । 'कुप भाषार्थ' ॥

**आपयत्यापतीत्यापेर्यौ वा णौ लम्भने पदे ।**
**व्याप्त्यर्थस्यास्य तु स्वादेराप्नोतीति पदं भवेत् ॥१३७॥**

'आप्लृ लम्भने' इत्यत्र मैत्रेयरक्षितेन 'आप [य] ते' इत्यात्मनेपदमप्युदाहृतमुपलभ्यते[३] । दैववशात्तु तस्यापि[४] नैतदस्तीति प्रतीयते । तदनु[५]सारेणैव हि प्रायेण देव प्रवर्तमानो दृश्यते । 'आप्लृ व्याप्तौ' ॥

**स्पर्शे चुपति मन्दाया गतौ तु शपि चोपति ।**

'चुप स्पर्शे' तुदादि । दीर्घोऽकित' (अष्टा० ७।४।८३) इत्यत्र भाष्ये चेच्छिद्यते चोच्छुप्यते इति 'छे च' ( अष्टा० ६।१।७३ ) इत्युदाहरणाच्छकारादिरय युक्त । 'चुप मन्दाया गतौ' ॥

---

१ दैवश्लोक ३ व्याख्याने, पृष्ठ ११ । २ द्र० क्षीरतरङ्गिणी १०।३२५, पृष्ठ ३२२—'तपः क्षपयति प्रावृट्' इत्यादि । धातुप्रदीप १०।३८४, पृष्ठ १५३ ।

३ धातुप्रदीपे तु सम्प्रति 'आपयति' इति परस्मैपदमेवोपलभ्यते ।

४ तस्यापि मत्रेयरक्षितस्यापीत्यर्थः । ५ तदनुसारेण मैत्रेयानुसारेणेत्यथ । अत्र- 'यत ' पदमध्याहार्यम्—'यतस्तदनुसारेण

**शपि तोपति हिसाया तत्रैव तुपतीति शे ॥ १३८ ॥**

**तत्रैव शशपोस्तुम्पेद् अदने तुम्पयेण्णिचि ।**

'तुप तुम्प हिसायाम्' । अत्र च 'अनिदिताम्' ( अष्टा० ६।४।२४ ) इति नलोपे कृते 'शे तृम्फादीनाम्' इति वार्त्तिकेन[1] नुम् । आदिशब्द प्रकारार्थं साहश्याथ । तेन तुदादिषु ये नोपधा पठयन्ते ते तृम्फादय । 'तुबि तुपि अदने' इति **मैत्रेयरक्षित**[2] । 'लुबि तुबि' इत्येव बहव[3] ॥

**लुम्बयेत् तुम्बयेदर्द शपि लुम्बति तुम्बति ॥ १३९ ॥**

'लुबि तुबि अदने' ॥

**हिसाया वक्त्रसयोगे चुम्बयेच्चुम्बति क्रमात् ।**

'चुबि हिसायाम्' । 'चुठि इत्येके' इति **मैत्रेयरक्षित**[4] । 'चुबि वक्त्रसयोगे' ॥

**णिचि कुम्बयतीति स्याच्छादने शपि कुम्बति ॥ १४० ॥**

'कुबि छादने' ॥

**गार्ध्ये लुभ्यति मोहार्थे तुदादेर्लुभतीति शे ।**

'लुभ गार्ध्ये', दिवादि । तच्चाभिकाङ्क्षा । 'लुभ विमोहने' ॥

**हृभी भये विभाषा णौ स्याता दर्भति दर्भयेत् ॥ १४१ ॥**

**अनीदितश्च सन्दर्भे हृभति ग्रन्थ ईदित ।**

विभाषेत्याद्यनुकर्षणार्थश्च । तत्र चाणिच्पक्षे 'हृभी भये', 'हृभ सन्दर्भे' इत्यनयोरीदितो दृब्धम् इति भवति, अनीदितस्तु

---

१ महा० ७।१।५९ ॥ २ धातुप्रदीपे तु 'लुबि तुबि तुबि अदने इत्येव पाठ उपलभ्यते ( द्र० पृष्ठ १३७ ) [ अत्र मुद्रिते ग्र थे दन्त्योष्ठ्यवन्तावाद्यौ धातू पठ्येते सोऽपपाठ ] । ३ यथा क्षीरस्वामी क्षीरतरङ्गिण्याम् ( १०।१०४ ) । ४ धातुप्रदीपे चुबि धातौ ( १०।६४, पृष्ठ १३६ ) 'चुभीत्येके' इति पठ्यते ।

दृभितमितीत्यभिप्रेत्य **अनीदित** इत्युक्तम् । बहवस्त्वन्त्य न पठन्ति । 'दृभी ग्रन्थे, तुदादि । स च ग्रन्थनम् ॥

**स्तभ्नाति स्तभ्नुयात् स्तुभ्नात्यपि स्तुभ्नोति सौत्रयो ॥१४२॥**

**स्तम्भते प्रतिबन्धार्थे स्तम्भेऽर्थे स्तोभते शपि ।**

क्र्यादिभ्य श्ना, स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्य श्नुश्च (अष्टा० ३।१।८१,८२) इति सौत्रयो धात्वो श्नुश्नौ । 'ष्टभि स्कभि प्रतिबन्धे' अनुदात्तेतौ । 'औपदेशिकोऽय टकारो न तु ष्टुत्वनिबन्धन इत्येके' इति **क्षीरस्वामिमैत्रेयरक्षितौ**[1] । तदा 'ष्टम्भते इत्येव रूपम् । स्कन्भुस्कुन्भ्वो पुन स्कभ्नाति स्कभ्नुयात् स्कुभ्नाति स्कुभ्नुयात् स्कम्भते इति सुशकमूहितुमित्याशय । 'ष्टुभु स्तम्भे' ॥

**हिंसाभाषणयो शोभेच्छोभार्थे शुभतीति शे ॥ १४३ ॥**

**शोभते शपि दीप्त्यर्थे शुम्भेरन्यत् तड समम् ।**

'शुभ शुम्भ भाषणे हिंसाया च' । **क्षीरस्वामी** 'शुम्भ भाषणे हिंसाया च, भासन इति च **दुर्ग**, षोपदेशोऽयमिति **गुप्त** 'सावष्टम्भ-निषुम्भसभ्रमनमद् भूगोले'[2] इत्यादिदर्शनात्''[3] इत्याह । **धनपाल-शाकटायनौ** तु यथा **दुर्ग** । 'शुभ शुम्भ शोभार्थौ', 'शुभ दीप्तौ' । तत्र च तडोऽन्यच्छुम्भेरपि सममित्यर्थ । हिंसाद्यर्थत्रये शशपो शुम्भतीति भवतीति यावत् । तृन्फादित्वान्नुम् ॥

**क्षुभ्नाति क्षोभते क्षुभ्येदिति सचलने क्षुभे ॥ १४४ ॥**

'क्षुभ सचलने', क्र्यादिर्दिवादिर्भ्वादिश्च । मध्योऽनुदात्तेत् । आद्ये 'क्षुभ्नादिषु च' (अष्टा० ८।४।३९) इति णत्वाभाव ॥

**नभ्येन्नभ्नाति नभते हिंसाया तत्तुभे समम् ।**

---

१ क्षीरतरङ्गिणी १।२७२, पृष्ठ ६२ । धातुप्रदीप १।३८७, ३८८, पृष्ठ ३३ ।
२ मालतीमाधव ५।२२ ॥ ३ क्षीरतरङ्गिणी १।२६२, पृष्ठ ६६ ।

'णभ तुभ हिंसायाम्,' दिवादि क्र्यादिर्भूवादिश्च। अन्त्योऽनुदात्तेत् ॥

**जृम्भणे जम्भते याभे जम्भेन्नाशे तु जम्भयेत् ॥ १४५ ॥**

'जभ जृभि गात्रविनामे'। 'रधिजभोरचि' ( अष्टा० ७।१।६१ ) इति नुम्। 'जभीत्येके' इति **मैत्रेयरक्षित**[1]। तदा निष्ठाया जब्धम्, अन्यदा जभितम्। 'भयविपरीतो मैथुने'। विपरीत इति यभेत्यर्थ। 'जभ इत्येके' इति **मैत्रेयरक्षित**[2]। 'जभ चे' ति **धनपाल**। 'यभ जभ' इति **शाकटायन**। न्यासे 'तु रधिजभो' (अष्टा० ७।१।६१) इत्यादौ 'जभ जृभि गात्रविनामे' इत्येव पाठात् जभिर्मैथुने नास्तीति गम्यते। **वृत्तौ** च 'रभिश्च भान्तेष्वथ मैथुने यभि'[3] इ यत्र रब्धा यब्धा इत्येवोदाहृते[4]। 'जभि नाशने'॥

**प्रेरणे लाभयेल्लाभे प्राप्त्यर्थे लभते शपि।**

'लाभ प्रेरणे,' कथादि। तत्फल पुनरललाभदित्यत्राग्लोपित्वाद्ध्र-स्वाभाव। 'लभेति सभ्या' इति **क्षीरस्वामी**[5]। डुलभष् प्राप्तौ॥

**अषित क्षाम्यति क्षान्ति क्षमूष क्षमते क्षमा ॥ १४६ ॥**

'क्षमू सहने'। 'शमामष्टाना दीघ' (अष्टा० ७।३।७४) इति दीघ। 'क्षमूष् सहने,' अनुदात्तेत्। षित्त्वादङ्। स च 'षिया क्तिन्' ( अष्टा० ३।३।९४ ) इत्यस्यापवाद। अषितस्त्वौत्सर्गिक क्तिन्नेव भवतीति **क्षान्तिरित्युक्तम्**[6]। 'अनुनासिकस्य क्विझलो क्ङिति (अष्टा० ६।४।१५) इति दीघ॥

**गत्यादावमतीति स्याद्रोगे स्यादमयत्यमे।**

---

१ धातुप्रदीप १।३८९, ३९०, पृष्ठ ३४।		२ धातुप्रदीप १।९८८, पृष्ठ ७२।		३ कशिकायाम् ( ७।२।१० ) उद्धृतेय कारिका।
४ द्र० काशिका ७।२।१०॥		५ क्षीरतरङ्गिणी १०।३२२, पृष्ठ ३२१।
६ दैवेन प्रकृतश्लोके इति शेष। क्षीरस्वामी तु षित्त्वमुक्त्वा 'बाहुलकात् क्षान्ति। अत एव क्षमू सहन इति सभ्या' इत्याह ( क्षीरत० ४।९९, पृष्ठ २१७ )।

'अम गत्यादिषु । ते च 'कन दीप्तिकान्तिगतिषु, ष्टन वन शब्दे, वन षण सम्भक्तौ' इति समनन्तरोक्ता । 'अपरे अव रक्षणगतीत्यादयो गत्यादय इत्याहु' इत्यपि धनपाल । 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इति विदूरे वक्ष्यमाणा अपि गृह्यन्ते इत्याहुरित्यर्थ । 'अम रोगे' । 'आद्यन्तवदेकस्मिन्' ( अष्टा० १।१।२१ ) इत्यमन्तत्वेऽपि 'न कम्यमिचमाम्'[1] इति मित्त्वनिषेधादमेर्हेतुमणिच्यप्यामयतीति द्रष्टव्यम् । अय च निषेध कमिचमिसाहचर्याद् भौवादिकस्यैवार्हतीति 'नान्ये मित'[2] इत्येव चुरादिणिचि निषेद्धव्यम् ॥

**चलने भ्रमति भ्रम्येच्छमादेर्भ्राम्यति भ्रमेत् ॥ १४७ ॥**

'भ्रमु चलने', 'भ्रमु अनवस्थाने' दिवादि । 'वा भ्राश' (अष्टा० १।३।७० ) इत्यादिना वा श्यन् ॥

**यमेरुपरमे यच्छेद् यमयेत् परिवेषणे ।**

'यमु उपरमे' । 'उदित्त्वमस्य केचिन्नेच्छन्ति' इति **मैत्रेयरक्षित**[3] । **क्षीरस्वामी** तु यमेत्येव पठित्वाह—'उदिदिति **श्रीभोज**'[4] इति । तत्फल तु 'यत्वा' इत्येवप्राप्ते यमित्वेतीड्विकल्प । 'अनुदात्तोपदेश' (अष्टा० ६।४।३७) इत्यादिना नलोप । इषुगमियमा छ ( अष्टा० ७।३।७७ ) [इत्यत्र] 'इषेश्छत्वमहलीति वक्तव्यम् । इह मा भूत् । इष्यति इष्णाति' इति **भाष्याद्** 'इष' इत्येवाष पाठ । 'यम च परिवेषणे' । अत्रार्थे यमिर्णिचमुत्पादयति मिच्च भवतीत्यथ । 'यमोऽपरिवेषणे' इति **क्षीरस्वामि**[5]**धनपालौ** । घटादावप्येवमेव पठन्ति । अर्थे त्वस्य विवदन्ते । तत्र **क्षीरस्वामी** तावत्—'यम उपरमे इत्यस्य धातो परिवेषणादन्यत्रैवार्थे मित्सज्ञा । यमयति नियमयति

१. क्षीरत० धातुसूत्र १।५५७ ॥ २ क्षीरत० धातुसूत्र १०।८० ॥
३. धातुप्रदीप १।६७२, पृष्ठ ७२ । ४ क्षीरतरङ्गिणी १।७११, पृष्ठ १५४ ।
५. क्षीरतरङ्गिणी १।५५६, पृष्ठ ११३ ।

सयमयति। परिवेषणे तु—यामयति श्राद्धे, यामयति चन्द्रम्'[1] इति। एवमेव **चान्द्रकौमारभोजीया**। **मैत्रेयरक्षितस्तु**—'अपरिवेषणे यमिर्न मित्। यामयति। परिवेषणे—यमयति ब्राह्मणान्। कथ नियमयति सयमयति इति? तत्करोति इति प्रातिपदिकाण्णिच् प्रत्यय'[2] इति। **धनपालश्च** निषेधपक्षमेव पर्यग्रहीत्। 'न पादम्याङ्यम' (अष्टा० १।३।८९) इत्यत्र च **जयादित्य**—'आयामयते यमोऽपरिवेषणे इति मित्सज्ञा प्रतिषिध्यते इति। व्यानञ्ज चैतज्जिनेन्द्र— 'न कम्यमिचमाम् इत्यतो नेति वतते'[3] इति। 'अनन्तरस्य विधिर्वा'[4] इति च नीति 'नेति वर्तते' इत्येतदेवानुवर्तते[5] 'घटादयो मित' इति मित्त्वविधे प्रतिषेधान्तरितत्वात्। **शाकटायन** पुनर्घटादौ चुरादौ च पक्षद्वयमपि परिजग्राह। **तत्र च क्षीरस्वाम्यादि**पक्षे यामयेदिति काम पठितव्यम्। **धनपाल**पक्षेऽप्येवमेव चुरादौ द्रष्टव्यम्। **शाकटायन**पक्षे पुनरुभयत्राप्युभयमिति विभाग॥

## स्यमे स्यमति शब्दार्थे वितर्के स्यामयेत णौ॥ १४८॥

'स्यमु स्वन ध्वन शब्दे'। 'स्यम वितर्के,' चितादि। 'नान्ये मित'[6] इति मित्त्वाभाव। पूर्वस्य हेतुमण्णिचि मित्त्वात् 'स्यमयेत् स्यमयेते'ति द्रष्टव्यम्। **न्यासकारस्तु** 'नाचार्यराजर्त्विक्सयुक्तज्ञात्याख्येभ्य' (अष्टा० ६।२।१३३) इत्यत्र स्यालशब्दव्युत्पादनार्थं 'स्यल वितर्के' इत्यपाठीत्॥

## आलोचने शामयते शाम्यत्युपशमे श्यनि।

'शम लक्ष आलोचने,' चितादि। 'शमु उपशमे'। घटादौ च 'शमो दर्शने' इति पठ्यते। शाम्यतेदर्शनेऽर्थे मित्सज्ञा न भवति इत्यर्थ। अदर्शने भवतीति तु **क्षीरस्वामी**[7]। एवमेव

---

१ क्षीरतरङ्गिणी १।५५९, पृष्ठ ११३, ११४। तत्र स्वल्प पाठभेद।

२ धातुप्रदीप पृष्ठ ५६। ३ न्यास १।३।८९॥ ४ परिभाषावृत्ति ५०।

५ नीति = न्याय। एतदेव = 'नेति अनुवर्तते' इत्येव रूपमेव। अनुवर्तते = अनुगृह्णाति। ६ क्षीरत० १०।८०॥ ७ द्र० क्षीरतरङ्गिणी १।५५८॥

**चान्द्रकौमारभोजीया** । **धनपालस्तु** दशने न भवती'त्युक्त्वा 'अदशने **इत्येके'** इत्याह । **शाकटायन**श्चात्रैवानुकूल । एषु च 'अनन्तरस्य विधिर्वा'[१] इति नीत्या प्रथम एव पक्षो युक्त । नञ्प्रश्लेष-क्लेशश्चैव परिहृतो भवति । तत्र च दशने निशामयति रूपमिति भवति । अन्यत्र निशमयति श्लोकम्, शमयति रोगमिति ॥

**भामेर्भामयति क्रोधे तत्रैव शपि भामते ॥ १४९ ॥**

भाम क्रोधे' । आद्य कथादि, अन्त्योऽनुदात्तेत् ॥

**वित्तत्यागे व्ययर्यात व्ययति व्ययते गतौ ।**

'व्यय वित्तसमुत्सर्गे' कथादि । 'व्यय गतौ' ॥

**पूरेराप्यायनेऽर्थे स्यात् पूर्यते पूरयेदपि ॥ १५० ॥**

पूरी आप्यायने,' दिवादिग्रसादि[२]श्च ॥

**स्तेये चोरयतीति स्याण्णिचि चोरयते चुरे ।**

**केचित्त्वे**तन्न पठन्ति । चुर स्तेये' । 'चुर छेदने,' तुदादि । णिच्चास्माद्धेतुमण्णिच् । चोरयते इत्येतच्च चोरयतीत्यस्याप्युपल-क्षणम् । **इति स्यादि**त्येतद्वा चुरेरित्यनेन सम्बद्धच चुरश्चोरयतीति स्यात् चोरयत इति चेति व्याख्येयम् । चुरतीति तु वाच्ये णिचा निर्देशो वैचित्र्यार्थं । सर्वथाप्यत्राथत शब्दतश्चाञ्जस्य नैव पश्याम । 'छुर च्छेदने' इत्येव च पाठ । तथा च 'सामोन्मुखेनोच्छुरिता प्रियेण' इति **भट्टि**[३] । 'स्यादाच्छुरितक हास सोत्प्रास स मनाक्स्मितम् **इत्यमरसिंह**[४]श्च। तच्चैतत् छुर च्छेदने क्त , 'यावादि (अष्टा० ५।४।२९) कन्निति **कविकामधेनौ** व्याख्यातम् । 'कृन्तत्यचोटयदचुण्टयदच्छुरच्च' **इत्याख्यातनिघण्टुश्च** । तदेवम्[५] 'अपाठपक्ष' एव न्याय्य , चितादौ **चेच्छुरिर्न** दृश्यते ॥

---

१ परिभाषावृत्ति ५० ।
२ ग्रसादिश्चुराद्यन्तर्गण ।
३ भट्टि सग ११।१४॥
४ अमर १।६।३५॥
५ तुदादेर्णिजन्तोदाहरणप्रदर्शनाद् धातोश्चुरादित्वादर्शनाच्चेत्यर्थ ।

[1]स्तेये चोरयतीति स्याच्चुरेश्छेदे चुरेदिति ।

इति तु क्वचित्पाठ । तदापि चकारादित्वमयुक्तमेव । यदा तु छकारादिरेवापाठचत, तदापि कथञ्चित् सादृश्य नेयम् ।।

**शूरयेतेति विक्रान्तौ शूर्यते स्तम्भहिसयो ।। १५१ ।।**

'शूर वीर विक्रान्तौ' पदादी[2] । 'शूरी हिसास्तम्भयो,' दिवादिरनुदात्तेत् ।।

**गुरते गुरयेतेति शे णावुद्यमने तङि ।**
**श्यनि गूर्यत इत्येव गतिहिसनयोस्तङि ।। १५२ ।।**

'गूरी उद्यमने,' तुदादि । 'गूर उद्यमने,' चितादि । 'घूरी गूरी हिसागत्यो ।।'

**सशये चारयेद् गत्या चरति**

'चर सशये । 'चर गतौ भक्षणे च' । यथा तु 'भक्षणेऽपि प्रयुज्यते चरि' इति **मैत्रेयरक्षित**[3] तथा नाय पाठोऽस्ति । अपि त्वर्थवशेन केनचित् प्रक्षिप्त इति गम्यते, तथा 'चर गतिभक्षणयोरि'ति[4] ।।

**ईरयतीरति ।**
**ईरे क्षेपे विभाषा णौ लुकीर्त्ते गतिकम्पयो ।। १५३ ।।**

'ईर क्षेपे', 'ईर गतौ कम्पने च', अनुदात्तेत् । गतावित्येव बहव ।।

**गतौ शलति सवृत्या चलने शलते शले ।**

शल हुल पत्लृ गतौ', ज्वलादय । 'शल श्वल्ल आशुगमने' इति ज्वलादौ **क्षीरस्वामी**[5] । 'श्वल श्वल्ल' इति **मैत्रेयरक्षित**[6] । तत्र चाद्य

---

१ इदमर्धं रा तशेषतया दवग्रन्थे 'गतौ शलति' ( श्लोक १५४ ) इत्यत प्राक पठचते इति गणपतिशास्त्रिण आहु । २ आगर्वीयान्तगतौ ।

३ धातुप्रदीपे तु 'चरतिभक्षण ऽपि पठयते' इति पाठ ( पृष्ठ ४२, ४३ ) ।

४ 'चर गतौ भक्षणे च' पाठवदयमप्यपपाठ एवेति भाव ।

५ क्षीरतरङ्गिणी १।३६७।। ६ धातुप्रदीप १।५५०, ५५१, पृष्ठ ४२ ।

पाठमाश्रित्य गतावित्येवोक्तम्[१] । पाठान्तरेऽपि वा गतिग्रहणेनाशुगतिरपि काम गृह्यते । 'शल चलनसवरणयो' ।।

**समाधौ शलतीति स्याच्छीलयत्युपधारणे ।। १५४ ।।**

'शील उपधारणे' । तच्चाभ्यास ।।

**कले कालयति क्षेपे गतिसख्यानयोर्द्वयो ।**
**कलयेच्छब्दसख्यानविषये कलते शपि ।। १५५ ।।**

'कल विल क्षेपे', 'कल गतौ सरयाने च', कथादि । 'कल शब्दसख्यानयो' ।।

**महत्त्वे पोलति पुलेर्णौ तु तत्रैव पोलयेत् ।**

'पुल महत्त्वे' । तुदादौ चाय **क्षीरस्वामिन**[२] । भूवादौ च स एवाह—'तुदादौ पुलतीति'[३], तदा पुलेदिति पाठ । चुरादौ तु 'समुच्छाये' इति पपाठ[४] ।।

**सघाते पूलयेत् पूलेत् पूलेः स्ता णिशपो क्रमात् ।।१५६।।**

'पूल सघाते' । 'पूर्ण' इति तु चुरादौ **क्षीरस्वामी**[५] । पूणेति **शाकटायन** । कोशशुद्धिस्त्वीदृशेषु कीदृशीति न विद्म ।।

**मूले प्रतिष्ठितौ मूलेद्रोहणे मूलयेदिति ।**
**वेलेत्तु चलने वेलेर्वरणे विलतीति शे ।। १५७ ।।**
**क्षेपे णौ वेलयेद्**

'वेलृ चलने' । 'विल वरणे' । 'विल क्षेपे' ।।

**भृत्या चालयेत्कम्पने चलेत् ।**

'चल भृतौ ।' 'चल कम्पने' । अस्य तु हेतुमण्णिचि 'कम्पने चलि'[६] इति मित्त्वाच्चलयेदिति द्रष्टव्यम् । कम्पनात्त्वन्यत्र चालयति सूत्रमर्थं वेति ।।

---

१ देवेनेति शेष । २ क्षीरतरङ्गिण्या तुदादौ नोपलभ्यते । एतद्विषये क्षीरत० पृष्ठ ११७, टि० ५ द्रष्टव्या । ३ क्षीरत० १।५७८ ।
४ क्षीरत० १०।५।६ । ५ क्षीरत० १०।८५ ६ क्षीरत० १।५४९ ।।

**फलेर्विशरणे फुल्ल फलित फलति त्रयम् ॥ १५८ ॥**
**आदितोऽनादितस्त्वन्त्ये रूपे निष्पत्तिवाचिन ।**

'ञिफला विशरणे'। अस्याकर्मकत्वाद् भावे क्त । 'गत्यर्थाकर्मक' ( अष्टा० ३।४।७२ ) इत्यादिना कर्तरि च, 'क्तोऽधिकरणे च' ( अष्टा० ३।४।७६ ) इत्यधिकरणे च । तत्रान्त्ययो 'आदितश्च' ( अष्टा० ७।२।१६ ) इतीटि प्रतिषिद्धे 'उत् परस्यात, ति च' ( अष्टा० ७।४।८८,८९ ) इत्युत्त्वे च कृते 'अनुपसर्गात् फुल्ल' ( अष्टा० ८।२।५५ ) इत्यादिना निष्ठातकारस्य लत्वनिपातनात् फुल्लम् । आद्ये तु 'विभाषा भावादिकर्मणो' ( अष्टा० ७।२।१७ ) इतीट्प्रतिषेधविकल्पात् फलित च । क्तश्चाय ञीत, क्त' (अष्टा० ३।२।१८७) इति वर्तमाने भवति। न तु भूते तक्रकौण्डिन्य-न्यायेन बाधात्, 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक'[१] इति चाहु[२]। येन नाप्राप्ते इति च यस्मिन् प्राप्त एवेत्यर्थ । अपरे पुनर्भूतेऽपि भवतीत्यूचु[३] । 'शबर्या पूजित सम्यग्'[४] इत्यादिप्रयोगाश्चात्रैवानुगुणा । 'अपवादविषये क्वचिदुत्सर्गस्यापि समावेश' इति भोजदेव[५]। आह स्म चैतत् सर्वं सुधाकर—"अनेन वर्तमाने क्तेन भूते प्राप्त क्तो बाध्यते इति भर्तृहरि । भाष्यटीका-कृतस्तु भूतेऽपि भवतीत्यूचु । तथा च पूजितो गत पूजितो यातीति भूतकालो वाच्य । न तु पूज्यमानो वर्तमान" इति। 'फल निष्पत्तौ।' अस्य चानादित्त्वादनिट्त्वोत्त्वयोरसम्भवेन फुल्लाभावाद **अन्त्ये** इत्युक्तम् ॥

**विदारणे शपि दलेद् दालयेदिति णौ दले ॥ १५९ ॥**

'दल विदारणे'। अन्त्यो ग्रसादि । 'विशरणे' त्वाद्य बहव

१ परिभाषावृत्तौ नास्ति । परिभाषेन्दुशेखर स० ५८ ।   २ कैयटादय इति शेष । द्र० महाप्रदीप ३।२।१८८ ।   ३ क इति न जानीम ।
४ रामा० बाल० १।५६ ॥   ५ सरस्वतीकण्ठा० १।२।१०२ ॥

पठन्ति । 'दलन्ति ककुभानि चे' ति दण्डिन प्रयोग[1]। सर्वथाप्यस्य 'दलिवलीति'[2] मित्त्वाद् दलयेदित्यपि विशरणे द्रष्टव्यम् ॥

**श्लेषे मिलेत् सङ्गमे तु मिलते मिलतीति च ।**

'मिल श्लेषणे', 'मिल सगमे', तुदादी । अत्र **मैत्रेयरक्षित**— 'मिल श्लेषणे', इत्येके पठन्ति'[2] इति । **कौमारा** पुनरमुमेव पठन्ति । **शृङ्गारप्रकाशे** तु 'मिलन्त्याशासु जीमूता[3] इत्यपठितधातुषु मिलति प्रदर्शित ॥

**अर्दने देवयेद् दीव्येत् क्रीडादौ परिकूजने ॥ १६० ॥**
**देवयेतेदितो दिन्वेद् देवेर्देवेत देवने ।**

'दिवु अर्दने' । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमद-स्वप्नकान्तिगतिषु' । 'दिवु परिकूजने', चितादि । 'हिवि दिवि धिवि जिवि प्रीणनार्था' । तेवृ देवृ देवने', अनुदात्तेतौ ॥

**माने गर्वयते दर्पे गर्वतीति भवेच्छपि ॥ १६१ ॥**

'गर्व माने', पदादि । 'कर्व खर्व गव दर्पे' ॥

**ष्ठीवति ष्ठीव्यतीत्येते स्याता निरसने ष्ठिवे ।**

'ष्ठिवु निरसने' । अन्त्यो दिवादि । 'सादेशे सुब्धातुष्ठिवुष्वक्कतीना प्रतिषेध' इति वार्त्तिकेन[4] सत्वाभाव । 'ष्ठिवुक्लमुचमा शिति' (अष्टा० ७।३।७५) इति दीर्घ ॥

**पूरणे पूर्वतीति स्यात् पूर्वयेण्णौ निकतने ॥ १६२ ॥**
**पूर्व्यतीति तु यत् स्वप्ने तत् कण्ड्वादिषु दर्शनात् ।**

'पुर्व पर्व मव पूरणे' । उपधाया च ( अष्टा० ८।२।७८ ) इति दीघ । पुर्व निकेतने । तच्च निवास । 'पूर्व भावे स्वप्ने च

1 काव्यादश २।११८॥ 2 द्र० धातुप्रदीप ६।८३, पृष्ठ ११० ।
३. उद्धृत क्षीरस्वामिना ( क्षीरत० १०।३२५ व्याख्याने ) ।
४. महा० ६।१।६४॥

कण्ड्वादिगणपाठेषु पूर्वशब्दो न दृश्यते। यस्त्वय दर्शित सोऽप्येव लोटोऽथनिर्देश एव भवेत्। तथा **चामोघाया** वृत्तावथनिर्देशाद्विना **शाकटायन** कण्ड्वादीन् पठन् पूर्वशब्द न पपाठ। गणपाठे[1] तु लोटो धौर्त्ये पूवभावे स्वप्ने चेत्यथत्रय निर्दिदेश[2] ॥

**व्यक्तोक्तौ क्लेशते क्लेशे क्लिश्नाति तु विबाधने ॥ १६३ ॥**
**दिवादेरुपतापेऽर्थे तङि स्यात् क्लिश्यते पदम् ॥**

'क्लेश व्यक्तायां वाचि,' अनुदात्तेत्। 'बाधने' इति दुग। 'क्लिशू विबाधने,' क्र्यादि। 'क्लिशु उपतापे ॥'

**दशने दशतीति स्यात् तत्र दशयते णिचि ॥ १६४ ॥**
**भाषणे दशयेत्**

'दश दशने'। दशसञ्ज' ( अष्टा० ६।४।२५ ) इति न लोप। दशि दशने,' चितादि। 'दशे'त्येके। तथा च 'दश्' इति[3]। **शाकटायन** पुनर्दशुङ् इति। 'दशि भाषार्थ' ॥

**काशेर्दीप्तौ काश्येत काशते।**

'काशृ दीप्तौ,' दिवादिर्भूवादिश्च। अनुदात्तेत् ॥

**लिश्यते लिशतीत्येवमल्पीभावे गतौ क्रमात् ॥ १६५ ॥**

'लिश अल्पीभावे,' दिवादि। तुदादिश्चाय **क्षीरस्वामी**[4]**धनपालयो**। 'लिश गतौ,' तुदादि। तयो[5] रनुमतोऽय पाठ। [6]द्विष्पाठ-

---

१ गणपाठे धातुगणे कण्डूवादावित्यथ। द्र० धातुसख्या १२८९ ॥

२ स एव शाकटायन इति शेष। ३ अत्र कश्चित् पाठो भ्रष्ट इति प्रतीयते। वाक्यमिद 'दश' पाठ सवादयितु प्रवृत्तम्। ४ द्र० क्षीरत० ६।१२५। एतद्व्याख्यानस्था टिप्पण्यपि द्रष्टव्या। ५ तयो क्षीरस्वामिधनपालयो-रित्यथ। मत्रेयस्याप्ययमेव पाठ। द्र० धातुप्रदीप ६।१४७, पृष्ठ ११५।

६ द्विष्पाठस्तु क्षीरतरङ्गिण्या तुदादौ नोपलभ्यते। यथा तु पुरुषकारस्तथा क्षीरस्वामिमते 'लिश अल्पीभावे' 'लिश गतौ इति तुदादावेव द्विष्पाठ प्रतीयते। इत्थमेव तस्योत्तरवाक्य सगच्छते।

स्त्वेवमथभेदान्नूनम् । एव तु 'लिश गत्यल्पीभावयो'रित्यनुक्तिर्वै चित्र्यार्था ॥

**व्याप्तावश्नुते इत्याहुरश्नातीति तु भोजने ।**

'अशू व्याप्तौ,' स्वादि । 'अश भोजने,' क्र्यादि ॥

**बाधने स्पर्शने चार्थे हिक्कादौ स्पशते स्पशेत् ॥ १६६ ॥**

**ग्रहणे श्लेषणे चार्थे चुरादौ स्पाशयेत णौ ।**

'स्पश स्पशबाधनयो'। **क्षीरस्वामी** तु 'पषेत्येके। पाषण्ड पाषाण'[1] इत्याह। **दुर्गशाकटायनयोश्चैष** एव पक्ष । तत्र चाद्य पाठ 'प्रतिस्पशोऽविसृजस्तूर्णितम'[2] 'यतो व्रतानि पस्पशे'[3] 'शब्दविद्येव नो भाति राजनीतिरपस्पशा'[4] इत्यादि प्रयोगानुगुण । पाषण्डादिस्तु 'पष अनुपसर्गाद्' इत्यस्य कथादेर्भविष्यति । पष बन्धने इत्यस्यैव वा युजादे । पश बन्धने इत्यत्र **मैत्रेयरक्षित** —'पष बन्धन इति युजादावेके पठन्ति'[5] इति । अव्युत्पन्नो वास्तु । 'स्पश ग्रहण-श्लेषणयो,' चितादि ।

**भ्राशते भ्लाशते दीप्तौ भ्राश्यते भ्लाश्यते तथा ॥१६७॥**

'टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ'। 'वा भ्राश' इति ( अष्टा० ३।१।७० ) वा श्यन् ॥

**झषेज्झषेत सवृत्यामादाने हिसने झषेत् ।**

'झष आदानसवरणयो'। 'झष हिसार्थे' ॥

**इष्णात्याभीक्ष्ण्य इच्छायामिच्छेद् गत्यर्थ इष्यति ॥ १६८ ॥**

'इष आभीक्ष्ण्ये'। 'पौन पुन्य भृशार्थो वाभीक्ष्ण्यम्'। तद्विषयाया क्रियायामित्यथ । तथा च श्रूयते—'पुर इष्णासि पुरुहूत पूर्वी'[6]

---

१ क्षीरतरङ्गिण्या तु दुर्गमतेन 'पष' पाठो निर्दिश्यते (द्र० १०।१६५, पृष्ठ ६६)।
२ ऋ० ४।४।३॥ ३ ऋ० १।२२।१६॥ ४ शिशुपालवध २।११२॥
५ धातुप्रदीप १०।१७८, पृष्ठ १४१। ६ ऋ० १।६३।२ ॥

इति । अत्र ह्यासुरीणा पुरूणा पुरामभीक्ष्ण हननादिरर्थो गम्यते । 'इषु इच्छायाम्' । यथा तु 'तीषसहलुभरुषरिष' ( अष्टा० ७।२।४८ ) इत्यत्र "इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध, इह माभूत् प्रेषिता प्रेषितु प्रेषितव्यम्" इति भाष्य तथा इष इत्येव पाठ । यदाह कैयट — "इषु इच्छायामिति केचित् तौदादिकमुदितमधीयते । अन्ये तूदित्त्वस्य प्रयोजनमपश्यन्त इष इच्छायामिति पठन्ति । ये त्विह 'तीषुसहेति' पठन्ति तन्मतेनेह विशेषणार्थं उकार । तत्र वार्त्तिककारमतेन त्रयोऽपीषयोऽननुबन्धका, इह च तीषसहेति पाठ । तदाह इषेरिति"[१] इति । अत्र च तीषेत्यनेनैव क्त्वायामिड्विकल्प सिद्ध । शतुर्वा नुमि'ति चोक्त[२]मेवोन्नेयम् । 'इषुगमियमा छ' ( अष्टा० ७।३।७७ ) [ इति ] । 'इष गतौ' दिवादि । जेषृ णेषृ एषृ प्रेषृ गतौ' इत्यस्य तु तङि 'एषते' । अत्रैव तु क्षीरस्वाम्याह—'चुरादावप्येषयती[३]ति'॥

**ईषतीष उञ्छेऽर्थे गत्यादावीषते भवेत् ।**

गत्यादाविति 'ईष' इत्येव । 'ईष उञ्छे ।' 'ईष गतिहिंसादर्शनेषु' ॥

**घुषेर्विशब्दनादौ णौ घोषयत्यविशब्दने ॥ १६६ ॥**
**घोषतीतीदितो घुषेद् घुषते कान्तिकर्मणि ।**

'घुषिर् विशब्दने' । तच्च शब्देन स्वाभिप्रायप्रकाशनम् । धातूनामनेकार्थत्वेनार्थान्तरस्यापि सम्भवादादिशब्द प्रकारार्थो व्याख्येय । यदि तु "विशब्दनार्थे णौ" इति पाठ स्यात् तदा न कश्चित् क्लेश । 'घुषिरविशब्दने' (अष्ट० ७।१।२३) इत्यत्र विशब्दने

१ महाभाष्य-प्रदीप ७।२।४८ ॥ पूर्वं १४८ श्लोकस्य पूर्वार्धस्य व्याख्यानमपि द्रष्टव्यम् । २ दैवश्लोक ५७, तदीय व्याख्यान च ।
३ क्षीरतरङ्गिण्या ( १।४०६, पृष्ठ ८६ ) 'चुरादावन्वेषयति' इति पाठ । चुरादिव्याख्याने नेम धातु पठति क्षीरस्वामी । तत्र क्षीरत० पृष्ठ ८६, टि० २, पृष्ठ २००, टि० ७ च द्रष्टव्या ।

विभाषा घुषेर्णिज् भवति इति **भाष्ये** स्थिते घोषतीत्यपि भवति। 'घुषिर् अविशब्दार्थे'[१]। घुषिरित्ययं धातुः यथाप्रयोगं विशब्दनादन्यत्रार्थे वर्तते इत्यर्थः। शब्दार्थ इति तु **क्षीरस्वामी**[२]**धनपालभागवृत्तिकाराः**[३]। शब्द इति **चन्द्रदुर्गौ**। घुषृ शब्दे इति **शाकटायनः**। तेन च इरित्स्थाने ऋदित् क्रियते[४]। अस्मिंश्च पाठे अस्यैवानेकार्थत्वेन विशब्दनार्थत्वस्यापि सम्भवाद् विनापि णिज्विकल्पेन विशब्दनेऽपि घोषतीति सिद्ध्यति। प्रपञ्चितं चैतत् **प्रक्रियारत्ने**। 'घुषि कान्तिकरणे'। घषि करणे **इत्यन्ये**, घसीत्यपरे। तथा च **क्षीरस्वामी**—'घसि करणे, घसते। **चन्द्रो** घषीत्याह, घषते। घुषि कान्तिकरणे इति दुर्गः'[५] इति॥

**ईर्ष्यायामादरे चार्थे क्रमात् सूक्ष्र्यति सूर्क्षति॥ १७०॥**

'सूक्ष्र्य ईक्ष्य ईर्ष्य ईर्ष्यार्थाः'। 'सूर्क्ष आदरे' इति च। अनादरे इति च बहवः। **क्षीरस्वामी**—'सूर्क्ष्य अनादरे'[६] इति पठित्वाह—'षान्तोऽयमिति **चन्द्रः**' इति। तत्र च 'सोमेन यक्ष्यमाणो नर्तुं सूर्क्ष्येन्न नक्षत्रम्'[७] इति दर्शनाद् यथादैवमेव युक्तम्[८]॥

**धारणे पोषयेत् पुष्टौ पुष्येत् पुष्णाति पोषति।**

'पुष धारणे,' असादिः। 'पुष पुष्टौ,' दिवादिः क्र्यादिर्भ्वादिश्च। 'पूष वृद्धौ' इत्यस्य तु पूषति॥

---

१ द्र० धातुप्रदीप १०।१८५। २ 'घुषिर विशब्दने। विशब्दनं विशिष्टशब्दकरणम्' इति क्षीरस्वामी। द्र० क्षीरत० १०।१७२।

३ द्रष्टव्यमस्मदीयं भागवृत्तिसंकलनम् ७।२।२३। उद्धरणसंख्या १४३, १४४।

४ अत एव अङ्विधाने 'ऋदितोऽनङि' (४।३।१०) इत्यसुसूत्रयत्।

५ क्षीरतरङ्गिणी १।४३२, पृष्ठ ९२। ६ क्षीरतरङ्गिण्यां 'सूक्ष्य' इति पाठः। स एव युक्तः, उत्तरत्र 'षान्तोऽयं चन्द्रः' इति पाठदर्शनात्। पुरुषकारस्यात्र पाठो भ्रष्टः स्यात्। ७ द्र० आप० श्रौत ५।३।२१॥ तत्र 'सूर्क्षेत्' इत्येव टीकाग्रन्थेषु पाठः। मैसूरसंस्करणे सूत्रपाठे 'सूक्ष्मेन्न' इति पाठो मुद्रितः। स किं मुद्रणप्रमादजः उत 'सूक्ष्म' धातुज इति विचारणीयम्।

८ दैवोक्तम् आदरार्थत्वमेव युक्तम्, न पुनरयोक्तमनादरार्थत्वम्।

**म्लेच्छने म्रक्षयेन्म्रक्षेत् सघाते**

'म्रक्ष म्लेच्छने'। तच्चाव्यक्तवाक् अपशब्द इत्यथ । म्लेच्छो ह वा एष यदपशब्द '[१] इति च श्रूयते। म्रक्ष सघाते ॥

**दाह कर्मणि ॥ १७१ ॥**

**प्लोषति प्लुष्यतीति स्ता प्लुष्णाति स्नेहनादिषु ।**
**प्रुष्णाति च प्रोषति च दाहे**

'श्रिषु श्लिषु प्रुषु प्लुषु दाहे'। 'प्लुष दाहे', पुषादि । **क्षीरस्वामी** त्वन्यथापि दिवादावमु पपाठ[२] । तत्फलभेद पुनरप्लुषद् अप्लोषीद् इत्यडो भावाभावौ । 'प्रुष प्लुष स्नेहनसेचनपूरणेषु', क्र्यादि । एव चैतेष्वेव क्र्यादिपाठात् 'बन्धने जुडतीति च'[३] इतिवत् दाहेऽर्थे प्रोषतीति चेति वाक्यार्थसमुच्चय एव **च**, दाह इति वा प्रागुक्तरूपयो[४] समुच्चयेन चात्रात्यन्ताय व्यवहितान्वय । दाहग्रहणेनैव तयोरपि धिया सन्निधानात् ॥

**भूषति भूषयेत् ॥ १७२ ॥**

**अलङ्कृतौ**

'भूष अलङ्कारे' ॥

**क्षमाया यौ मर्षेन्मर्षेत मर्षयेत् ।**
**मृष्यते मृष्यतीति स्यात् स्नेहने ऽपि मर्षति ॥ १७३ ॥**

'मृष तितिक्षायाम्', स्वरितेतौ। दिवादिश्चान्त्य । **शाकटायनस्य** त्वाद्य आत्मनेपदी । पृषु वृषु मृषु सेचने, मृषु सहने च' ॥

**सेचने मेषतीति स्यात्स्पर्धाया मिषतीति शे ।**
**व्याप्तौ वेवेष्टि वेविष्टे विषेर्वेषति सेचने ॥ १७४ ॥**

---

१ महाभाष्ये पस्पशाह्निके स्मन पाठ । २ अन्यथापि पुषादेर यत्रापि (क्षीर० ४१७ ) । तेन अडो भावाभावौ ज्ञेयौ । ३ दैवश्लोक ८९ । ४ प्लोषतिप्लुषत्यो ।

**विप्रयोगे विषे क्र्यादेर्विष्णातीति पद भवेत् ।**

'जिषु विषु मिषु सेचने'। 'मिष स्पर्धायाम्'। 'विष्लृ व्याप्तौ', जुहोत्यादि । उदिदित्येके इति **क्षीरस्वामी**[1] । **'आर्याणामुदित्, द्रमिडाना** लृदित्' इति **धनपाल** । 'पुषादि' ( अष्टा० ३।१।५५ ) इत्यत्र **सुधाकर** —'द्रमिडानामविषत् **आर्याणा** तु शल इगुपधादनिट क्स ( अष्टा० ३।१।४५ ) अविक्षदिति **नन्दी**' इति । 'निजा त्रयाणा गुण श्लौ'[2] (अष्टा० ७।४।७५) । 'विष विप्रयोगे' ।

**श्लिष्यत्यालिङ्गने दाहे श्लेषति श्लेषणे णिचि ॥ १७५ ॥**
**श्लेषयेत्**

'श्लिष आलिङ्गने,' दिवादि । आत्रार्थे आङ्पूर्वत्व प्रायिकमेव । यदाह **भट्टि**—'मा न श्लिक्ष प्रिय प्रिये'[3] इति । **माघश्च** श्लिष्यन्त मुहुरितरोऽपि त निजस्त्रीम्'[4] इति । 'श्लिषु दाहे ।' 'श्लिष श्लेषणे' ॥

**क्रमतोऽलीके तुष्टौ हर्षति हृष्यति ।**

'हृषु अलीके' । 'हृष तुष्टौ,' दिवादि ॥

**शक्तौ वर्षयते सेके वर्षेत् स्नेहे तु वर्षते ॥ १७६ ॥**

'वृष शक्तिबन्धे' इति तु **प्रायस्तन्त्रान्तरे**ऽपि पठ्यते । 'वृषु सेचने' । 'वर्ष स्नेहने,' अनुदात्तेत् ॥

**भक्षयत्यदने भक्षे शपि भक्षति भक्षते ।**

'भक्ष अदने,' 'भक्ष भक्षणे ।' 'भ्लक्ष इत्येके' इति **मैत्रेयरक्षित**[5] । 'भ्रक्षे'ति **क्षीरस्वामी**[6] । यथा तु 'गतिबुद्धि' ( अष्टा० १।४ ५२ ) इत्यत्र 'भक्षेरहिसार्थस्य' इति **वार्तिक** प्रकृत्य 'भक्षयति पिण्ड

---

१ क्षीरत० ३।१४ ॥ २ 'वेवेष्टि' इति रूपे । ३ भट्टि सर्ग ६।१६॥
४ शिशुपालवध ४।२८॥ ५ धातुप्रदीप १।८६७, पृष्ठ ६५ ।
६ क्षीरतरङ्गिण्या तु 'प्लक्ष इति दुर्ग ' इति पठ्यते । द्र० १।६२१, पृष्ठ १२८ । 'भ्रक्ष इत्येके इति तु धातुप्रदीपे ( १।८६७, पृष्ठ ६५ ) पठ्यते ।

इत्येवोक्त भाष्ये न पुनर्भक्षतीत्यपि, तथा भक्षतिनैवास्तीति गम्यते[१] ॥

**कान्तौ लष्यति लष्येत श्यनि वा लषते लषेत् ॥ १७७ ॥**

'लष कान्तौ'। **श्यनि वेति**। 'वा भ्राश' (अष्टा० ३।१।७०) इति विकल्पेन श्यनि। ततश्च फलत पुन पाठ मत्वेदमुक्तम्। एतच्च क्रमुप्रभृतीनामपि काम द्रष्टव्यम् ॥

**कर्षत्याकर्षणे शे तु कृषते कृषतीत्युभे।**

'कृष विलेखने'। कर्षतिस्त्वाकर्षणे प्रसिद्ध ॥

**शिषोऽसर्वोपयोगे यौ शेषयेच्छेषतीत्युभे ॥ १७८ ॥**
**लुङ्चभावादङोऽशेषीच्छिनष्टीति विशेषणे।**

'शिष असर्वोपयोगे'। शिष हिंसार्थ' इत्यस्यापि शेषतीति द्रष्टव्यम्। **लुङीति** लृदित्वाभावादस्य लुङ्चङोऽभाव। 'शिष्लृ विशेषणे' इत्यस्य तु रुधादेर्लृ दित्त्वादशिषदित्यङ् भवति। विपूर्वश्चायमत्रार्थे प्रयुज्यते। अत्र **चाशेषीदित्ययुक्तम्**। 'शिषि पिषिम्, इत्यनिट्कारिका[२] प्रामाण्याच्छिषिमात्रस्यानिट्त्वेन 'शल इगुपधादनिट क्स' ( अष्टा० ३।१।४५ ) इति क्से सति 'अशिक्षत्' इत्येव युक्तत्वात् ॥

**शपि रोषति हिंसाया रोषे रुष्यति रोषयेत् ॥ १७९ ॥**

'रुष हिंसार्थ'। 'रुष रोषे', दिवादिश्चुरादिश्च ॥

**चुम्बने परिमाणे च निक्षेन्निक्षयते क्रमात्।**

'णिक्ष चुम्बने'। 'निक्षति चुम्बति निस्ते तन्व्या ( स्या ) मुखपङ्कज प्रेयान्' इति च **सुन्दरपाण्ड्य**[२]। रोषे इति तु 'वा

१ कैयटनागेशव्याख्यानालोचनयाऽप्येतत् प्रतीयते यद् भक्षेभू वादौ पाठो नास्ति।

२ अत्राह गणपतिशास्त्री—सुन्दरपाण्ड्यकृत आर्यावलीति कश्चिद् ग्रन्थोऽसमग्रो [ ट्रिवेण्ड्रम ] राजन्द्रीयपुस्तकशालायामस्ति। तदनुपलब्धभागगतमिदमथ स्यात्।

निसनिक्षनिन्दाम्' ( अष्टा० ८।४।३३ ) इत्यत्र **न्यास**[१] । 'णिक्ष परिमाणे' चितादि । निष्क इत्येव तु दृश्यते[२] **मैत्रेयरक्षितेन** च निष्कमित्युदाहृतम्[३] ॥

**जोषयेज्जोषतीत्येते युजादे परितर्कणे ॥ १८० ॥**

**प्रीतिसेवनयोरिष्टं तुदादेर्जुषते पदम् ।**

'जुष परितर्कणे' । 'परितर्पणे परितृप्तिक्रियायाम्' इति **क्षीरस्वामी**[४] । 'जुषी प्रीतिसेवनयो ' ॥

**धृषे प्रसहने यौ स्ता धर्षयेद् धर्षतीत्युभे ॥ १८१ ॥**

**प्रागल्भ्यार्थे तु धृष्णोति परस्मैपदिनावुभौ ॥ १८१½ ॥**

'धृष प्रसहने' । 'धृषा प्रसहने' इति शाकटायन । 'ञिधृषा प्रागल्भ्ये,' स्वादि ॥

**आलोचनार्थाण्णिचि लक्षयेत,**

**स्याल्लक्षयेल्लक्षयतेऽङ्कनार्थात् ।**

'शम लक्ष आलोचने', चितादि । 'लक्ष दर्शनाङ्कनयो ' । अत्र **मैत्रेयरक्षित**—'स्वरितेत्त्वमस्य केचित् प्रतिपद्यन्ते । एतच्च ज्ञापक चुरादिण्यन्ताद् 'णिचश्च' ( अष्टा० १।३।७४ ) इत्यात्मनेपद न भवतीत्यत्र'[५] इति । **हरदत्तस्तु** 'णिचश्च' ( अष्टा० १।३।७४ ) इत्यत्राह—

[६]'एष विधिर्न चुरादिण्यन्तात्स्यादिति कश्चन निश्चिनुते स्म ।

---

१ न्यासे 'णिक्षि रोषे' इति पाठ । गणपतिशास्त्रिणाऽत्र 'इत्यत्र न्यास —णिक्ष परिमाणे ।' इत्येव पाठो मुद्रित , स चि त्य ।

२ क्षीरतरङ्गिणी १०।१३४॥ धातुप्रदीपे 'णिष्क' पाठ ( १०।१४७ ) ।

३ धातुप्रदीप १०।१४७, पृष्ठ १३८ । ४ द्र० क्षीरत० १०।२२३ ।

५ द्र० धातुप्रदीप १०।५, पृष्ठ १३१ । पाठभेदस्तत्र स्वल्प ।

६ कारिकेय 'णिचश्च' ( १।३।७४ ) इति सूत्रस्य पदमञ्जर्यां नोपलभ्यते । महापदमञ्जर्यामिय कारिका स्यादिति पुरुषकारवचनात् सम्भाव्यते । हरदत्तेन

आप्तवचोऽत्र न किञ्चन दृष्टं लक्षयते स्वरितेत्त्वमनार्षम्[1] ॥इति॥

**स्यात् तक्षतीति त्वचनेऽथ वा श्नौ ।**

**तक्ष्णोति तक्षेच्च तनूक्रियायाम् ॥ १८२३ ॥**

'तक्ष त्वचने' । अत्र **क्षीरस्वामी**— त्वचनं त्वचो ग्रहणम्, संवरणमिति **दुर्ग**'[2] इति । यथादुर्गमेव च **धनपालशाकटायनौ** । अयं चार्थः 'त्वच संवरणे' इति धातुपाठसिद्ध इत्यन्तरङ्गः । अन्यस्तु[3] – सत्यापपाश' ( अष्टा० ३।१।२५ ) इत्यत्र त्वचं गृह्णाति णिचि कृद्वृत्तिसिद्ध इति बहिरङ्गः । णिच्कल्पनं चात्रातिरिच्यते । त्वक्षेत्यैव तु बह्वनुमतः पाठः । तथा च 'तनूकरणे तक्षः' ( अष्टा० ३।१।७६ ) इत्यत्र **वृत्तिः** –'धातूनामनेकार्थत्वाद् विशेषणोपादानम्' इति । यदि हि त्वचनेऽपि तक्षति स्यात्, ततस्तद्धानायैव विशेषणोपादानं स्यात् । एवं च **स्यात्त्वक्षती**ति पठित्वा तदेव चकारेणानुकृष्य तनूक्रियायां च त्वक्षतीत्यपि भवतीति कामं व्याख्यायताम् । **इटा भिदे**[4]त्यप्यूह्यम् । तक्ष्णोति तक्षेदिति च लषिवद्वा[5] सादृश्याद्वा नीयताम् । 'तक्षू त्वक्षू तनूकरणे' । 'अक्षोऽन्यतरस्याम्' 'तनूकरणे तक्षः' (अष्टा० ३।१।७६) इति वा श्नुः ॥

**आशसे स्यादिच्छायां शसतीति स्तुतौ भवेत् ॥ १८३ ॥**

**हिंसायां शसति**

---

काचित् 'महापदमञ्जरी' अपि रचिताऽऽसीत् । तदुक्तं तेनैव 'दाधा घ्वदाप्' ( १।१।२० ) इति सूत्रस्य पदमञ्जर्याम्—'भाष्यवार्तिकविरोधस्तु महापदमञ्जर्यामस्माभिः प्रपञ्चित इति । १ सत्यपि स्वरितत्वे तक्षर्णिजुविकल्पे प्रमाणं भविष्यति, यथा चौरादिकमिदित्त्वम् । तस्माद् 'लक्षे स्वरितत्वमनार्षम्' इति न शक्यते वक्तुम् । तत् णिज्विकल्पे तदभावे लक्षते 'लक्षते लक्षति' इत्युभयपदित्वं ज्ञापयतीत्यस्माकं मतम् ।

२ क्षीरतरङ्गिणी १।४४३, पृष्ठ ९२ । ३ त्वग्ग्रहणरूपस्तु इत्यर्थः ।

४ द्र० दवश्लोक ११६ । तक्षस्त्वचे नित्यमिट् । तनूकरणार्थे तु धातोरूदित्त्वाद् विकल्पेनेट इति भेदः । ५ द्र० दवश्लोक १७७ व्याख्यानम् ।

अयंभावः –यथा लषे फलभेदाद् द्विष्पाठ आश्रितः, एवं च तक्षेरपि श्यविकल्परूपफलभेदाद्विष्पाठ आश्रितः ।

'आङ शसि हिंसायाम्', अनुदात्तेत्। क्षीरस्वामी तु–दौर्गा आङ शन्सु इत्याहु'[१] इत्याह। आशस्यते आशस्यते फलभेद च'। 'शन्सु स्तुतौ'। शसु इति रूढे[२] पाठेऽपि नोपध एवायम्। तत्फल च शस्यत इत्यादौ न लोप। 'शसु हिंसायाम्'॥

**इच्छायामाशास्ते शास्ति शासने।**

'आङ शासु इच्छायाम्', 'शासु अनुशिष्टौ', अदादी॥

**शब्दार्थे नासते नासे कौटिल्ये नसते नसे ॥ १८४ ॥**

'णासृ रासृ शब्दे'। 'णस कौटिल्ये'॥

**असतेऽसति गत्यादौ भुव्यस्ति क्षेपणेऽस्यति।**

'अस गतिदीप्त्यादानेषु'। तथा च **काव्यालङ्कारे वामन**— 'लावण्य उत्पाद्य इवास यत्न'[३] इत्यत्र आसेत्यसते'[३] इति। 'अष इत्येके' इति **मैत्रेयरक्षित**[४]। अषिति **शाकटायन**। 'अस भुवि', अदादि। भवन भू। 'असु क्षेपणे', दिवादि॥

**अस्रं सिष्ट स्रंसते चाद्युतादेस्**
**ते च द्वे स्तामस्रसच्च द्युतादे।**
**ध्वसत्यादे साहचर्याद् द्युतादेर्**
**नीगित्याहुर्दत्वमन्यस्य चापि ॥ १८५½ ॥**

'स्रन्सु प्रमादे'। **क्षीरस्वामी** तु स्रन्भु इति भकारान्त प्रकरणानुरोधेन पठित्वा 'स्रन्स्वित्येके'[५] इत्याह। **मैत्रेयरक्षितस्तु**— 'सयोगान्तसाधर्म्येण सकारान्तोऽप्यत्र निर्दिश्यते'[६] इति। 'स्रसु ध्वसु

---

१ द्र० क्षीरतरङ्गिणी १।४१७, पृष्ठ ६०। क्षीरतरङ्गिण्या तु—दुग आङ शासु इत्याहु–माशासते आशास्यते' इत्येव पाठ उपलभ्यते।

२ 'प्रसिद्ध' इत्यभिप्राय। ३ वामनालकारसूत्र ५।२।२७॥ लावण्य इति श्लोकस्तु कुमारसभवस्य (द्र० १।३५)।

४ धातुप्रदीप १।८६०, पृष्ठ ६४। ५ क्षीरतरङ्गिणी १।२७७, पृष्ठ ६३।

६ धातुप्रदीप १।३६४, पृष्ठ ३४।

भ्र सु अवस्रसने'। अस्रसत्। 'द्युद्भ्यो लुङि' ( अष्टा० १।३।६१ ) इति विभाषा परस्मैपदम्। पुषादिद्युतादि' ( अष्टा० ३।१।५५ ) इत्यङ्। 'अनिदिताम्' ( अष्टा० ६।४।२४ ) इति नलोप। यश्च 'नीग्वञ्चु [1][ स्रसुध्वसुभ्र सु' ( अष्टा० ७।४।८४ ) इति स ध्वसुभ्र सुसाहचर्याद् द्युतादेभवति। 'वसु ] स्रसुध्वस्वनडुहा द' ( अष्टा० ८।२।७२ ) इति दत्व तु ध्वसुसाहचर्यानभ्युपगमाद् अद्युतादेश्चेत्याह। अत्र **मैत्रेयरक्षित**—'द्युतादावप्यय पठ्यते। तस्यैव ध्वसुभ्र सुसाहचर्यान्नीगित्याहु। दत्वे पुनरसाहचर्यमिच्छन्ति उखास्रदिति[2] ॥

**दसयेन्मोक्षणे दस्येत् क्षये दसयते णिचि ॥ १८६ ॥**
**दशदर्शनयोर्दासेर्दाने दासति दासते।**

'जसि मोक्षणे,' 'दसि च'। रक्षणे' इत्येव तु दृश्यते। तत्रापि दसि चेत्येतत् कचिदेव कोशे। तथा च 'जसु कुडु पल [ र ] क्षणे'[3] इत्येव **शाकटायन**।

**वस्यति स्तम्भने वस्ते छादने वसयेद् वसेत् ॥ १८७ ॥**
**निवासे वासयेत् स्नेहे वासयत्युपसेवने।**
**[वसेन्निवासे वसयेच्च वस्ते**
**त्वाच्छादने स्तम्भन एव वस्येत्।**
**निवासयत्याच्छदने निवासेर्-**
**आसेवने वासयतीति वासे ॥]**

**मोक्षणे जस्यतीति स्याण्णावत्रार्थे तु जसयेत् ॥ १८८ ॥**

---

१ अत्र [ ] कोष्ठा तगत पाठोऽस्माभिर्वर्धित। स च मूलपाठे त्रुटित आसीत्। २ धातुप्रदीप १।३६४, पृष्ठ ३४। स्वल्प पाठभेदोऽत्र।

३ गणपतिशास्त्रिणानवबुध्य 'जसु कुटुम्बरक्षणे इति स्यात्' इत्युक्तम्। शाकटायनधातुपाठे तु 'कडु जसु पल रक्षणे' इति पाठ ( द्र० धातुसूत्र

हिंसाताडनयोर्धात्वोरुदितोर्जासयेदिति ।
तस्यत्युपक्षयार्थे णावलङ्कारे तु तसयेत् ॥ १८९ ॥

ध्रस्नाति ध्रासयत्युञ्छे पदे श्नि णिचि ध्रसे ।

[ 'उध्रस उञ्छे', क्र्यादिश्चुरादिश्च । क्षीरस्वामिमते धात्ववयवोऽ ][1] यमुकार । उध्रसाञ्चकारोध्रस्ना[2]दित्युदाहृते । अपरथा च ध्रसु इत्येव ब्रूयादित्यभिप्राय । यथा तु भूधा तौ स[3] एवाह—

दरिद्राजागृदीधीडामेकाचा च चिरेजिरे ।
अदन्तोर्णोतिवेवीडा स्मयते नेत् तथौलडे[4] ॥ इति ॥

तथात्रेत्वेन भाव्यम्[5] । 'ध्रसू' इति च शाकटायन ॥

लासयेच्छिल्पयोगेऽर्थे श्लेषणे क्रीडने लसेत् ॥ १९० ॥

'लस शिल्पयोगे' । 'शिल्पोपयोगे' इति क्षीरस्वामी[6] । केचिन्मू-

---

१ इत पूव पुरुषकारकोशे पत्रमेक त्रुटितमिति पूर्वसपादकेन गणपतिशास्त्रिणा विज्ञापितम् । अत्र [ ] एव कोष्ठेऽस्माभि पाठपूर्तिरुत्तरपाठानुरोधेन काचित् कृता । २ 'औध्रसाद्' इति ट्रिवेण्ड्रममुद्रितेऽपपाठ । क्षीरतरङ्गिण्या क्र्यादौ ( धा० सू० ५६ ) 'ध्रस्नाति' इत्येव पठ्यते । चुरादौ ( धा० सू० १९१ ) 'ध्रासयति ध्रस्नाति' इत्युदाहृत्य 'प्रयोगसमवायीत्येके । उद्ध्रासयति उद्ध्रस्नाति' इत्युक्तवान् स्वामी ( क्षीर० पृष्ठ ३०३ )। सायणस्तु धातुवृत्तौ ( पृष्ठ ३७४ ) क्र्यादिगणे 'अत्र क्षीरस्वामी उकार धात्ववयवमाह । तन्मते उध्रस्नाति इत्यादि । उध्रसाचकार औध्रस्नात् इत्याद्युदाहार्यम् । अनवयवत्वे स्वादिवद् ध्रसु इत्येव ब्रूयादिति तस्याभिप्राय । स एव भूवादौ यदाह— इत्यादि पुरुषकारवदेव क्षीरस्वामिमतमुदाहृतवान् । ३ स एव क्षीरस्वाम्येव । ४ क्षीरतरङ्गिणी १।१, पृष्ठ ५ । ५ सायणस्तु क्षीरस्वामिमतानुसार श्लोकमेनमुदाहरन् 'तदुदाहरणप्रदर्शनपर न परिगणनम् इत्यप्याह ( धातुवृत्ति पृष्ठ ३७४ )

६ द्र० क्षीरतरङ्गिणी १०।१७४। यथा तु पुरुषकार-माधवीय धातुवृत्तिकार-प्रौढमनोरमाकारादयस्तथा स्वामिमते 'लस' इत्येव पाठ । परन्तु क्षीरतरङ्गिण्या 'लष' इत्येवमुपलभ्यते ।

र्धन्यान्तमेन धातु पठन्तीति[१] च। 'लस श्लेषणक्रीडनयो'॥

**भाषणे त्रसयेत् त्रसेर्धारणे त्रासयेण्णिचि।**
**त्रसति त्रस्यतीत्येवमुद्वेगार्थे तु वा श्यनि॥ १६१॥**

'त्रसि भाषार्थे'। 'त्रस धारणे'। अत्र **मैत्रेयरक्षित**— त्रासयति मृगान्। वारणे धारणशब्द[२] इति। वारणे इत्येव च **शाकटायन**[३]। 'त्रसी उद्वेगे'। 'वा भ्राश' (अष्टा० ३।१।७०) इति श्यन्॥

**णौ पिंसयति भाषार्थे गत्या तु शपि पेसति।**

'पिसि भाषार्थे'। 'पिस गतौ' इत्यपि चुरादौ पठ्यते। 'तुजि पिजि पिस हिंसाबलादाननिकेतनेषु' इति तु **धनपाल**। **शाकटायनस्याद्ययोरुदित्पाठमात्र विशेष**। सवथा तस्य पेसयतीति द्रष्टव्यम्। 'पिसृ पेसृ गतौ'। निदृ नेदृवद्[४] द्वावपीह काम ग्राह्यौ॥

**गतिशासनयो कस्ते कसतीति गतौ शपि॥ १६२॥**

'कसि गतिशासनयो'। 'कशे'ति **वामन**[५]। उक्त च 'भूवादि' (अष्टा० १।३।१) सूत्रे **सुधाकरेण**—"कसि गतिशासनयोरिति **पारायणिकै**रुदाहारि कस्ते कस इति। प्रतिष्कशश्च कशे (अष्टा० ६।१।१५२) इति च कश गतीत्येवाम्नायि" इति। 'कसेत्येके' इति च **क्षीरस्वामी**[६]। 'गॄ विज्ञाने' इत्यत्र च स[७] एवाह—

---

१ क्षीरतरङ्गिण्या तु 'तालव्या त इति कौशिकः। लाशयति' इति पाठ उपलभ्यते (द्र० पृष्ठ ३००)। सायणो धातुवृत्तौ दीक्षितश्च प्रौढमनोरमाया पुरुषकारवदेव स्वामिमतमुद्धरति। २ धातुप्रदीप १०।२०६, पृष्ठ १४३।

३ क्षीरतरङ्गिण्या दुर्गमतेऽपि 'त्रस वारणे' इति पठ्यते। पृष्ठ ३०४॥

४ अत्र चतुर्दशोत्तरशतश्लोकपठित 'निदिनेद्यो' इव अस्मिन्नपि श्लोके पेसति' इत्यनेन पिसृ पेसृ उभावपि शक्यते ग्रहीतुम्, उभयोरपि शपि 'पेसति' इत्येव रूप भवति। यथा स्वरितेतयोर्निदिनिद्यो' 'नेदति नेदते' इति रूपम्।

५ द्र० काशिका ६।१।१५२—कश गतिशासनयोरित्यस्य ।

६ क्षीरतरङ्गिणी २।१७, पृष्ठ १७०। ७ क्षीरस्वाम्येव। क्षीरतरङ्गिण्या तु 'गॄ विज्ञाने (१०।१५३) इत्यत्र पुरुषकारोद्धृत पाठो नोपलभ्यते। न च तत्रास्य पाठस्य किञ्चिन्निमित्तमप्युत्पश्याम। अतोऽत्र कदाचित् पाठभ्रंश सजात स्यात्।

**हिंसाताडनयोर्धात्वोरुदितोर्जासयेदिति ।**
**तस्यत्युपक्षयार्थे णावलङ्कारे तु तसयेत् ॥ १८९ ॥**

**ध्रस्नाति ध्रासयत्युञ्छे पदे श्नि णिचि ध्रसे ।**

[ 'उध्रस उञ्छे', क्रयादिश्चुरादिश्च । क्षीरस्वामिमते धात्ववयवोऽ ][1] यमुकार । उध्रसाञ्चकारोध्रस्ना[2]दित्युदाहृते । अपरथा च ध्रसु इत्येव ब्रूयादित्यभिप्राय । यथा तु भूधा तौ स[3] एवाह—

दरिद्राजागृदीधीडामेकाचा च चिरेंजिरे ।
अदन्तोर्णोतिवेवीडा स्मयते नेत् तथौलडे[4] ॥ इति ॥

तथात्रेत्वेन भाव्यम्[5] । 'ध्रसू' इति च **शाकटायन** ॥

**लासयेच्छिल्पयोगेऽर्थे श्लेषणे क्रीडने लसेत् ॥ १९० ॥**

'लस शिल्पयोगे' । 'शिल्पोपयोगे' इति **क्षीरस्वामी**[6] । केचिन्मू-

---

१ इत पूर्वं पुरुषकारकोशे पत्रमेक त्रुटितमिति पूर्वसपादकेन गणपतिशास्त्रिणा विज्ञापितम् । अत्र [ ] एव कोष्ठेऽस्माभि पाठपूर्तिरुत्तरपाठानुरोधेन काचित् कृता । २ 'औध्रसाद्' इति द्विवेरङ्कमुद्रितेऽपपाठ । क्षीरतरङ्गिण्या क्रयादौ ( धा० सू० ५६ ) 'ध्रस्नाति' इत्येव पठ्यते । चुरादौ ( धा० सू० १९१ ) 'ध्रासयति ध्रस्नाति' इत्युदाहृत्य 'प्रयोगसमवायीत्येके । उद्ध्रासयति उद्ध्रस्नाति' इत्युक्तवान् स्वामी ( क्षीर० पृष्ठ ३०३ )। सायणस्तु धातुवृत्तौ ( पृष्ठ ३७४ ) क्रयादिगणे 'अत्र क्षीरस्वामी उकार धात्ववयवमाह । तन्मते उध्रस्नाति इत्यादि । उध्रसाचकार औध्रस्नात् इत्याद्युदाहार्यम् । अनवयवत्वे स्वादिवद् ध्रसु इत्येव ब्रूयादिति तस्याभिप्राय । स एव भूवादौ यदाह— इत्यादि पुरुषकारवदेव क्षीरस्वामिमतमुदाहृतवान् । ३ स एव क्षीरस्वाम्येव । ४ क्षीरतरङ्गिणी १।१, पृष्ठ ५ । ५ सायणस्तु क्षीरस्वामिमतानुसार श्लोकमेनमुदाहरन् 'तदुदाहरणप्रदर्शनपर न परिगणनम् इत्यप्याह ( धातुवृत्ति पृष्ठ ३७४ )

६ द्र० क्षीरतरङ्गिणी १०।१७४। यथा तु पुरुषकार-माधवीय धातुवृत्तिकार-प्रौढमनोरमाकारादयस्तथा स्वामिमते 'लस' इत्येव पाठ । परन्तु क्षीरतरङ्गिण्या 'लष' इत्येवमुपलभ्यते ।

र्धन्यान्तमेन धातु पठन्तीति[१] च। 'लस श्लेषणक्रीडनयो'॥

**भाषणे त्रसयेत् त्रसेर्धारणे त्रासयेण्णिचि।**
**त्रसति त्रस्यतीत्येवमुद्वेगार्थे तु वा श्यनि॥ १९१॥**

'त्रसि भाषार्थ'। 'त्रस धारणे'। अत्र **मैत्रेयरक्षित**—त्रासयति मृगान्। वारणे धारणशब्द[२] इति। वारणे इत्येव च **शाकटायन**[३]। 'त्रसी उद्वेगे'। 'वा भ्राश' (अष्टा० ३।१।७०) इति श्यन्॥

**णौ पिंसयति भाषार्थे गत्या तु शपि पेसति।**

'पिसि भाषार्थ'। 'पिस गतौ' इत्यपि चुरादौ पठ्यते। 'तुजि पिजि पिस हिंसाबलादाननिकेतनेषु' इति तु **धनपाल**। **शाकटायन**स्याद्ययोरुदित्पाठमात्र विशेष। सर्वथा तस्य पेसयतीति द्रष्टव्यम्। 'पिसृ पेसृ गतौ'। निदृ नेदृवद्[४] द्वावपीह काम ग्राह्यौ॥

**गतिशासनयो कस्ते कसतीति गतौ शपि॥ १९२॥**

'कसि गतिशासनयो'। 'कशे'ति **वामन**[५]। उक्त च 'भूवादि' (अष्टा० १।३।१) सूत्रे **सुधाकरेण**—"कसि गतिशासनयोरिति **पारायणिकै**रुदाहारि कस्ते कस इति। प्रतिष्कशश्च कशे (अष्टा० ६।१।१५२) इति च कश गतीत्येवाम्नायि" इति। 'कसेत्येके' इति च **क्षीरस्वामी**[६]। 'गॄ विज्ञाने' इत्यत्र च स[७] एवाह—

१ क्षीरतरङ्गिण्या तु 'तालव्यान्त इति कौशिकः। लाशयति' इति पाठ उपलभ्यते (द्र० पृष्ठ ३००)। सायणो धातुवृत्तौ दीक्षितश्च प्रौढमनोरमाया पुरुषकारवदेव स्वाभिमतमुद्धरति।   २ धातुप्रदीप १०।२०६, पृष्ठ १४३।

३ क्षीरतरङ्गिण्या दुर्गमतेऽपि 'त्रस वारणे' इति पठ्यते। पृष्ठ ३०४॥

४ अत्र चतुर्दशोत्तरशतश्लोकपठित 'निदिनेद्यो' इव अस्मिन्नपि श्लोके पेसति' इत्यनेन पिसृ पेसृ उभावपि शक्यते ग्रहीतुम्, उभयोरपि शपि 'पेसति' इत्येव रूप भवति। यथा स्वरितेतयोर्निदिनिद्यो' 'नेदति नेदते' इति रूपम्।

५ द्र० काशिका ६ १।१५२—कश गतिशासनयोरित्यस्य                    ।

६ क्षीरतरङ्गिणी २।१७, पृष्ठ १७०।   ७ क्षीरस्वाम्येव। क्षीरतरङ्गिण्या तु 'गॄ विज्ञाने (१०।१५३) इत्यत्र पुरुषकारोद्धृत पाठो नोपलभ्यते। न च तत्रास्य पाठस्य किञ्चिन्निमित्तमप्युत्पश्याम। अतोऽत्र कदाचित् पाठभ्रंश सजात स्यात्।

'कसि गतिशासनयोरितीकारान्तोऽकारा'त शकारान्तश्च पठ्यते' इति । तदा कस्ते कष्टे इत्यपि द्रष्टव्यम् । 'कस गतौ' ॥

**शब्दे शपि रसेत् स्नेहास्वादयो रसयेद्रसे ।**

'रस शब्दे' । रासेस्तु तङि रासते । 'रस आस्वादनस्नेहनयो,' कथादि ॥

**प्रपूरणे दोग्धि दुग्धे दोहतीत्यर्दने दुहे ॥ १९३ ॥**

'दुह प्रपूरणे,' अदादि । तच्च दोहनाख्य रेचनम् । प्रतिष्ठत इतिवद् धात्वर्थवैपरीत्ये प्र । 'तुहिर् दुहिर् अर्दने' । 'तुहिर् उहिर् इत्येके' इति मैत्रेयरक्षित[1] । क्षीरस्वामीत्वमुमेव पठित्वाह 'तुहिर् दुहिर् इति दौर्ग'[2] इति ॥

**ण्यन्तस्य ग्रहणे गृहेर्गृह्यते तत्रानदन्ताद् गृहेर्-**
**भूवादे शपि गहते श्नि तु पदे गृह्णात्यगृह्णीत च ।**
**गर्हेर्वा णिचि निन्दनार्थविषये गर्हेत्तथागर्हयेद्-**
**भूवादे शपि कुत्सनार्थविषये गर्हेर्भवेद् गर्हते ॥ १९४ ॥**

'गृहू ग्रहणे', पदादि । 'गृहू ग्रहणे', अनुदात्तेत् अनदन्ताद् गृहेरित्यनेनैव पूर्वस्यादन्तत्वमात्र विशेषो गृहित्व चाविशिष्टमिति दर्शयता मन्दाना ग्रहपाठशङ्काऽपि निरवकाशता नीता[3] । 'ग्रह उपादाने' । 'गर्ह निन्दने', 'गर्ह गल्ह कुत्सायाम्' अनुदात्तेतौ । ये त्वेत पद्य प्रबन्धान्त एव पठन्ति, तेषा सत्यपि वृत्तभेदकृते परभागे गर्हयायमुपसहारो भवन् पुरोभागिना श्रवणोत्सवमेव पुष्णीयात् । न चेदयमन्यो व्यत्ययेन पाठोऽद्रक्ष्यत ॥

**रहयेद्रहति त्यागे गतौ रहेस्तु रहति ।**

---

१ धातुप्रदीप १।७४२, पृष्ठ ५२ । २ क्षीरतरङ्गिण्या 'तुहिर् दुहिर् इति चन्द्रदुर्गौ इति पाठ (१।४८७, पृष्ठ १००) । ३ अय भाव 'अनदन्तात् गृहे' इत्यनेन 'गृहू ग्रहणे' चौरादिकस्यादन्तत्वमात्र विशेष, शिष्ट गृहित्व-गृहधातुत्व समानम् इति दर्शयता पुरुषकारेण केषाञ्चित् ग्रहधातुपाठाशङ्काऽपि निवारितेति ।

'रह त्यागे', कथादिर्भूवादिश्च । तत्र चान्त्याद्धेतुमण्णिचि राहयति । 'रहि गतौ' ॥

**श्ने तृणेढीति हिंसाया तृहतीत्यूदितस्तृहे ॥ १९५ ॥**

'तृह हिंसायाम्' । तृह श्नमि कृते ढत्वधत्वष्टुत्वढलोपा । 'तृहू ष्टृहू तृन्हू हिंसार्था' । **क्षीरस्वामी** तु–'तृहू तृन्हू ष्टृहू ष्टृन्हू हिंसार्था । तृहू प्रभृतयश्चत्वारो धातवो हिंसार्था'[१] इति । तत्र च तृहति स्तृहति स्तृंहति इत्यपि काम द्रष्टव्यम् । तृम्फादित्वान्नुम्[२] ॥

**महयेन्महतीत्येते पूजाया णौ शपि क्रमात् ।**

'मह पूजायाम्' । आद्य कथादि । महत इत्यपि 'महि वृद्धौ' इत्यस्यानुदात्तेतो द्रष्टव्यम् । **क्षीरस्वामी** तु भाषार्थ[३] इत्याह । तस्य तु महयतीति ॥

**चहयेच्चहतीत्येते चहेः स्ता परिकल्कने ॥ १९६ ॥**

'चह परिकल्कने', चुरादि कथादिश्चाद्या । तत्र चाद्ये 'चपे'ति **मैत्रेयरक्षित**[४] । चहिश्चपिर्वाऽत्रार्थे णिचमुत्पादयति मिच्च भवतीत्यर्थ । अत्र च मित्त्वफलम्–आचाहि आचहि, चाह चाह, चह चहमिति चिण्णमुलोर्दीर्घविकल्प । अदन्तत्वफलमग्लोपित्वेन 'सन्वल्लघुनि चङ्परेऽनग्लोपे ( अष्टा० ७।४।९३ ) इति सन्वत्त्वस्य दीर्घो लघो ( अष्टा० ७।४।९४ ) इति दीर्घत्वस्य चाभावादचचहदिति ॥

**मर्षणे सहते यौ तु साहयेत् सहति द्वयम् ।**

**श्यनि सह्यति शक्यार्थे**

---

१ क्षीरतरङ्गिण्या ( ९।५७ ) 'तृह प्रभृतयश्चत्वारो धातवो हिंसार्था' इति नोपलभ्यते । २ शे तृम्फादीनाम् ( महा० ७।२।५९ ) इति वार्त्तिकेन नुम । ३ द्र० क्षीरतरङ्गिणी १०।१९७ पृष्ठ ३०४ । क्षीरस्वामिन 'भासार्था' इति पाठ , 'भाषार्था' इति तु मत्रेयरक्षितस्य ( द्र० धातुप्रदीप पृष्ठ १४३ धातुसख्या १०।२१२-२४५ ) । द्रष्टव्य ४० श्लोकस्य पुरुषकारव्याख्यानम ( पृष्ठ ४० ) । ४ धातुप्रदीप १०।८८, पृष्ठ १३५ ।

'षह मर्षणे'। 'षह षुह शक्त्यार्थे'। **क्षीरस्वामी** तु षुहेत्येव पठित्वाह—षह षुह शक्ताविति **दुर्ग**'[१] इति। षुह इत्येव च **धनपालशाकटायनौ**।

**पूजनेऽर्हति चार्हयेत् ॥ १९७ ॥**

'अर्ह पूजायाम्' ॥

**स्नेहने स्नेहयेत् प्रीतौ स्निह्ये द्**

'ष्णिह स्नेहने'। स्निहेति **क्षीरस्वामी**[२]**धनपालशाकटायना**। तदापि दन्त्यपरसादित्वात् 'ष्णिह' इत्येव युक्तम्। ष्णिह प्रीतौ ॥

**बृहति बर्हति।**

**वृद्धौ भाषार्थविषये बृहयेद् बर्हयेदिति ॥ १९८ ॥**

'दृह दृहि बृह बृहि वृद्धौ'। 'बृहि शब्दे च' इति द्वयमाह **क्षीरस्वामी**[३]। 'बृहिर्' इति **दौर्गा**[४]। अबृहद् अबर्हीत् इति। यथा दौगमेव **चान्द्रा**। अनुदात्तेत्सु च **स**[५] एवाह 'बर्ह बल्ह प्राधान्ये'। घञ्—बर्हम्, बल्हम्। चुरादौ तु भाषार्थौ। बर्हयति बल्हयति इति। 'वर्ह वल्ह परिभाषणहिंसाच्छादनेषु' इति च। **मैत्रेयरक्षित** पुन 'वर्ह वल्ह प्राधान्ये, बर्ह बल्ह परिभाषणहिंसाच्छादनेषु' इत्यर्थव्यत्ययेन पपाठ[६]। नैव च तृतीय[७] **धनपालस्य**

---

१ क्षीरतरङ्गिणी ४।१८, पृष्ठ २०१। तत्र 'शक्तौ' स्थाने 'सभक्तौ' पाठः

२ 'चुरादौ स्नेहयति' इति दैवादिके ष्णिह प्रीतौ (९१) सूत्रव्याख्याने तरङ्गिण्या पाठ। चुरादौ तु (३१) तु 'स्निट स्नेहने' इति पाठ उपलभ्यते।

३ क्षीरतरङ्गिणी १।४८५, ४८६। अत्र 'द्वयमाह' इत्यस्य सूत्रद्वयमाहेति भाव।

४ क्षीरतरङ्गिणी १।४८६ व्याख्याने, पृष्ठ १००। ५ स एव = क्षीरस्वाम्येव। द्र० क्षीरतरङ्गिणी १।४२३ ॥ ६ अय भाव—अन्ये प्राधान्येऽर्थे ओष्ठ्यवर्ण पठन्ति, परिभाषणादिषु दन्त्योष्ठ्यम्। मत्रेय पुनरन्यथाह—प्राधान्येऽर्थे दन्त्योष्ठ्यम् परिभाषादिषु चोष्ठ्यम्। अपि च, मुद्रिते धातुप्रदीपे प्राधान्ये 'वल्ह' धातुरेव पठ्यते, न वर्हापि। एवमेव उभयत्र दन्त्योष्ठ्यवर्णपाठोऽपि प्रमादज। ७ तृतीय पवर्गीय बवर्ण धनपालस्योभयत्रापि नेति भाव। अर्थात् स उभयत्र दन्त्योष्ठ्यमेव वर्णं पठति।

'वह वल्ह प्राधान्ये । वर्ह वल्ह परिभाषणहिंसाच्छादनेषु । छादयत्यनेनेति वर्ह घञ्' इति । **शाकटायनो**ऽप्यत्रैव पाठेऽनुकूल । [ भाषाविशेषार्थत्वात् ][1] तत्र च[2] प्रबहर्थानुकूल्यादाद्य पाठो युक्त । 'प्रवल्हिका प्रहेळिका'[3] इति चात्रैवानुकूल , भाषाविशेषाथत्वात् प्रवल्हे । तथा च बहवृचब्राह्मणम्—'प्रवल्हिका शसित । प्रवल्हिकाभिवै देवा असुरान् प्रवल्हयाथैनानत्यायन्'[4] इति । व्याकृत चैतत् **गोविन्दस्वामिना**—"प्रवल्हिका प्रहेळिका 'वितती किरणौ द्वौ' इति षडनुष्टुभ । प्रवल्हय अनृत भाषित्वा" इति । सर्वथाऽपि बर्हत इत्याद्यपि काममूह्यम् । सवत्रैव तत्तद्ग्रन्थगतास्तत्तत्पाठभेदादयो ( यथा ? )[5] द्रष्टव्या , युक्त्यादिभ्यश्च विवेक्तव्या । 'बृहि बर्ह भाषार्थौ' । 'ब्रूस बह हिसायाम्' इत्यस्यापि बहयेत् । **इति** पुन [ प्रकारार्थं ] प्रकरणसमाप्त्यर्थश्च । **'पठितस्य पुन पाठे'**[6] इति यदुपक्रान्त तदित्थमुपसहृतमित्यथ ॥

कथ पुनरत्र प्रकरणे सर्वत्रापि पुन पठिता धातवो व्युत्पाद्यन्ते । तथैव पुन पाठो भवेत्, यथा भूप्रभृतय । येषा पुनर्नुमादिना भिन्नरूपता, कथमिव तेषा पुन पाठो भवेत् ? तत्र नुमा तावत् बृहति बहतीत्यादिषु अनन्तरोदितेष्वेवासौ दृश्यते । अत्र हि [ अन्यो बृहि ] अन्यश्च बृहिरिति सकृदेव तयो पाठ प्रस्फुट । अथापि बृहतिबृहयत्योरत्र पुन पाठो भविष्यति, तथापि कथ बृहिबृह्यो , **'इदितस्त्वङ्क्ते तत्र'**[7] इत्यादिषु च चरिष्यसि[8] । न च तेष्वपि पाठावस्थाया नुमभावाद् भवेदेव पुन पाठ इति साम्प्रतम्, नुम्विधावुपदेशिवद्वचनेन धातुग्रहणबलेनैव वा नुमोऽपि पठितकल्पत्वात्[9] ।

१ असम्बद्ध एवाय पाठ । २ सर्वेषु पाठेषु प्रथम 'बर्ह बल्ह प्राधान्ये' इत्ययमेव पाठो युक्त इति भाव । ३ अमर १।५।६।। ४ ऐ० ब्रा० ६।३३।। ५ यथायथमिति युक्त पाठ स्यात् । ६ दैवश्लोक २। ७ दैवश्लोक ४१। ८ गति वक्ष्यसीत्यथ । ९ द्रष्टव्यम्—पूवत्र १०५ श्लोकस्य व्याख्याने ( पृष्ठ ७४ ) 'अथ मितोरि—नुमि कृते' इति पुरुषकारवचनमनुसन्धेयम् ।

अथापि धातुपाठसिद्धं रूपमनूद्यैतत् फलवचनप्रतिज्ञानाद् भवत्ये-
वात्रापि नुम्विधुरेण पठितेन रूपेण पुनःपाठः, तथापि बृंहिबर्ह्यो
**अङ्कलक्षणः**[१] इत्यादिषु च का वार्त्ता ? । एवमन्यत्राप्येवंविधे '**दो
द्यति**'[२] इत्यादौ '**क्षिणोत्यावगुणे क्षिणो**'[३] इत्यादौ च भिन्नरूप-
धातुपाठफलोपदर्शने पर्यनुयोगः प्राप्तः प्रत्याह—

**नुमादिनान्यभावेऽपि सादृश्यात् केऽप्यवक्षत ।**

यत् क्वचिन्नुमादिनान्यत्वेऽपि धातव उक्ताः केषाचित् पुनःपाठ-
फलमुक्तमिति यावत्, तच्च यथादर्शनं मिथस्तेषां सादृश्याद्युक्तमेव ।
ततश्च '**पठितस्ये**'[४]त्यस्याः प्रतिज्ञायाः क्वचिदप्यन्यथात्वमशङ्कनीयमेवे-
त्यर्थः । अत्र च पूर्वोक्तरीत्या[५] नुमान्यभावस्यासंभवाद् आदिशब्दोपात्त
एव तात्पर्यं द्रष्टव्यम् । नुम्ग्रहणं वा नकारोपलक्षणम् । नुमिति
नकारस्य **पूर्वाचार्यसंज्ञेति**[६] न 'धातुलोप आर्धधातुके' ( अष्टा०
१।१।४ ) इत्यत्र **कैयटः** ॥

मया चात्र '**चौ मित्त्वेऽपीदमेव**[७] **यौ द्रवीकरणेऽनात्त्वे**[८] इत्यादौ
चुशब्दयुशब्दौ व्यवहृतौ शब्दैकदेशलक्षणन्यायेन चुरादियुजादिपरौ
वेदितव्यौ । 'बष्कयाऽसे'[९] 'नब्विषयस्यानिसन्तस्य'[१०] इत्यादौ सशब्द-
नप्शब्दाविव समासनपुंसकपरावित्याह—

**चुरादिश्चुर्युजादिर्युः स यस्माण्णिज्विभाषितः ॥ १९९ ॥**

**यस्माद् गणाद् 'आधृषाद्वा'[११] इति णिज्विकल्पितः, स युजादिर्युः ।**

---

१ दैवश्लोक ४१ । २ दैवश्लोक ६ । ३ दैवश्लोक १३ ।
४ दैवश्लोक २ । ५ 'धातुपाठसिद्धं रूपमनूद्य देवेनैतत्फलवचनं प्रति-
ज्ञातमिति' विवरणरीत्या इत्याशयः । ६ 'अट्कुप्वाङ्नुम्' ( ८।४।२ )
इत्यष्टाध्यायीसूत्रेऽपि नुम्शब्देन अनुस्वारो गृह्यते । अत एव 'तृंहणम
तृंहणीयम्' इत्यत्र णत्वं भवति । वृत्तिकारस्तु 'नुमग्रहणमनुस्वारस्याप्युप-
लक्षणम्' इत्याह । तच्चिन्त्यम उपलक्षणार्थे गौरवात् । ७ दैवश्लोक ८।
८ दैवश्लोक १७ । ९ उणादिगणे ४।१।८९ गणसूत्रमिदम् ।
१० फिट् सूत्र २।३ । ११ क्षीरत० धातुसूत्र १०।२०१ ।

